श्रीवेङ्कामात्यविरचितः

# कामविलासभाणः

सम्पादकरचितया टिप्पण्या सहितः

# KĀMAVILĀSABHĀṆA

OF

Śrī Veṅkāmātya

with Ṭippaṇī by the Editor

*General Editor*

Dr. H. P. Devaki, M.A., Ph.D.

*Critically Edited by*

*Vyākaraṇālaṅkāra Vidwān*

H. V. NAGARAJA RAO, M.A.




**ORIENTAL RESEARCH INSTITUTE**
**UNIVERSITY OF MYSORE**
**MYSORE**
1996

**Price : Rs. 20–00**

UNIVERSITY OF MYSORE

Oriental Research Institute Series - 183

मैसूरु विश्वविद्यानिलयः

प्राच्यविद्यासंशोधनालयग्रन्थमाला - १८३

श्री वेङ्कामात्यविरचितः

# कामविलासभाणः

# KĀMAVILĀSABHĀṆA

OF SRI VEṄKAMATYA

प्राच्यविद्यासंशोधनालयः, मैसूरु

ORIENTAL RESEARCH INSTITUTE, MYSORE

1996

मैसूरु विश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला-१८३

श्री वेङ्कामात्यविरचितः

# कामविलासभाणः

प्रधानसम्पादिका
*अलङ्कारशास्त्रविदुषी*
**डा. एच्.पि. देवकी,** एम.ए.पि एच्.डि.
प्राच्यविद्यासंशोधनालयस्य निर्देशिका
मैसूरुविश्वविद्यानिलयस्नातकोत्तरसंस्कृतविभागाध्यक्षा च
मानसगङ्गोत्री, मैसूरु

प्राच्यविद्यासंशोधनालयः
मैसूरु
१९९६

UNIVERSITY OF MYSORE
**Oriental Research Institute Series - 183**

# KĀMĀVILASABHĀṆA

*OF SRI VEṄKAMATYA*

General Editor
*Alankarashastra vidushi*
**DR. H.P. DEVAKI,** M.A. Ph.D.
Director, Oriental Research Institute, Mysore
and Head, Department of P.G. Studies
and Research in Sanskrit, Manasagangotri
University of Mysore, Mysore

**ORIENTAL RESEARCH INSTITUTE**
**MYSORE**
**1996**

मैसूरु विश्वविद्यानिलयः
प्राच्यविद्यासंशौधनालयस्यग्रन्थमाला - १८३

श्री वेङ्कामात्यविरचितः

# कामविलासभाणः

सम्पादकः
*व्याकरणालङ्कारविद्वान्*
**एच्.वि. नागराजराव्**
सहायकसंशोधकः
प्राच्यविद्यासंशोधनालयः, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु

१९९६

UNIVERSITY OF MYSORE
**Oriental Research Institute Series - 183**

# KĀMĀVILASABHĀṆA

*OF SRI VEṄKAMATYA*

Critically Edited by
*Vyākaranālankara Vidvān*
**H.V. NAGARAJA RAO**
Senior Research Assistant
Oriental Research Institute, Mysore

ORIENTAL RESEARCH INSTITUTE
MYSORE - 570 005
**1996**

# FOREWORD

The Oriental Research Institute of the University of Mysore feels honoured to present Venkāmātya's 'Kāmavilāsa Bhāṇa' to the lovers of literature. The Institute has already published four other works of Venkāmātya namely, Vīrarāghava-Vyāyoga, Lakshmīswayamvara-samavakāra, Sītākalyāṇa-vīthi and Rukminimadhavanka.

The present work, 'Kāmavilāsa' or 'Kāmakalāvilāsa Bhāṇa' is critically edited with footnotes by Vidwan H.V. Nagaraja Rao, a distinguished scholar and an eminent Sanskritist of Oriental Research Institute. The editor has brought out the text after a critical and comparative study of the four manuscripts of 'Kāmavilāsabhāṇa'. Among the four, three manuscripts are preserved in the Oriental Research Institute, Mysore and another manuscript is in the Saraswathi Bhandāra of Mysore Palace. The footnote provided by the editor is simple and effective. Vidwan Nagaraja Rao is a rare scholar who uses Sanskrit in its simplicity.

Popularly called by his countrymen by the names Venkasūri Venkatabhūpathi, Venkappayya Venkayārya, Pradhāni Venkamatya was a poet of Karnataka, the homeland of great scholars like Sāyanāchārya. He was the son of Vāmāmba and Hampayāmātya of Ramapura, a village situated somewhere near Mysore. As indicated by the very name of his father he belonged to a family of ministers. On the basis of historical evidence, it may be

noted Venkāmātya served under Rāni Virammāji of Bidanoor around the year 1757 A.D. The shrewd politician in him was recognised and admired by Hyder Ali of Mysore. Venkāmātya went to Sreerangapattanam on invitation from Hyder Ali who honoured him with the title 'Pradhān'. The later half of the political life of Venkāmātya, thus, was under the service of Hyder Ali. But their relationship did not continue smoothly till the end. Hyder Ali under the influence of some bad counsel accused Venkāmātya with the charges of misuse of power and failure to collect the revenues of the State. He went to the extent of even imprisoning Venkāmātya at Sreerangapattana. With the influence of an officer called Appajiram, Venkāmātya was released from the imprisonment and permitted to enjoy the title 'Pradhan', with an allowance of a thousand rupees per month. But the poet cum politician could not bare the brunt of insult and died in the year 1782.

## THE WORKS OF VENKĀMĀTYA

Pradhan Venkāmātya was a rare poet of versatile talent. He has contributed to all varieties of dramatic composition except Nāṭaka and Prakaraṇa. In addition to this the Mahākāvya, Campu and Gadyakāvya composed by him are ample evidences of his poetic genius. They are Kāmavilāsabhāna, Kukṣimbhara Bhaikṣava Prahasana, Mahendravijayaḍima, Vīrarāghava vyāyoga, Lakshmi-svayamvara samavakara, Sītakalyāṇavithi, Rukmini-madhavānkah, Urvasisārvabhaumehamṛgah, Jagannātha-vijayam, Kuśalava campu, Sudhajhari (gadyakavyam), Alankāramaṇidarpaṇam, Chidadvaitikā and Hanumacchatakam. In Kannada, Venkāmātya has composed Karnāta rāmāyanam, Sitāvivaaha and Hanumatstotra.

The present work Kāmavilāsabhāṇa as indicated by its very name belongs to the 'Bhāṇa' type of dramatic composition. It is a play with one act where only a single character appears on the stage and holds conversation with many characters which do not appear on the stage. The theme of Kāmavilāsabhāṇa is based on erotics and 'Sriṅgārābhāsa' is the main flow of the whole work. It reflects the society of the 18th century. The editor refers to the salient features of 'Bhāna' in his introduction to this work.

The Oriental Research Institute hopes to bring out critical editions of all the works of Venkappayya, the poet, politician and philosopher.

I sincerely thank Professor M. Madaiah, Vice-Chancellor of the University of Mysore for his constant encouragement and co-operation in the academic activities of the Oriental Research Institute. I am also thankful to the Registrar and the Finance officer, University of Mysore for their encouragement in bringing out this text.

My thanks are due to the Director, University Printing Press for his timely help. The neat and the flawless appearance of the text is entirely due to the efficiency of Shri K.V. Sampathkumar, Sreekantha power press, Mysore.

Mysore
28.11.1996

**Dr. (Mrs.) H.P. DEVAKI**
Director

# प्रस्तावना

विदितमेव सर्वैः विद्वज्जनैः अस्याः प्राच्यविद्या-संशोधनालयनाम्न्याः संस्थायाः सकाशात् उत्तमानां ग्रन्थानां प्रकटनं भवतीति । अयं च संशोधनालयः आ शतवर्षेभ्यः नैकविधान् शास्त्रग्रन्थान् तथा साहित्यग्रन्थांश्च प्राकाशयत् इति च सर्वविदितम् ।

सन्ति चात्र एकादशसंख्याकाः विद्वांसः साहित्यनिपुणाः शास्त्रनिष्णाताश्च । ते च भारतवर्षे तत्र तत्र संचार्य हस्तप्रतीः सङ्गृह्णन्ति । सङ्गृहीतानां हस्तप्रतीनां संशोधनं, तथा मुद्रणाय सिद्धीकरणश्च तेषामेव कर्म । विद्वद्भिः सम्पादिताः द्व्यशीत्यधिकशतसंख्याकाः (१८२) ग्रन्थाः अद्यावधि प्रकाशं नीताः । इदानीं त्र्यशीत्यधिकशतसंख्याकोऽपि कामविलासभाणनामकः ग्रन्थः प्राकाश्यं नीयते इति महदिदं प्रमोदस्थानम् ।

बहोःकालात् प्राक् एषा संस्था वेङ्कामात्येन रचितानाम् अष्टानां रूपकाणां प्रकटनं कर्तव्यम् इति यं महोद्देशं हृदि निधाय प्रवृत्ता स उद्देशः इदानीं पूर्ण इति च महान् सन्तोषस्य विषयः ।

कामविलासभाणस्यास्य रचयिता वेङ्कामात्यः । अयन्तु यथा राजकीयरङ्गे सिद्धहस्तः तथा साहित्यक्षेत्रेऽपि । इदं च आश्चर्यस्थानं यत् अमात्योऽपि अयं कविः इति । कर्णाटकभाषायां तथा देवभाषायां ग्रन्थरचनासामर्थ्यम् अस्य आसीदिति तद्रचितग्रन्थाभ्यासेन ज्ञायते । दशरूपकोक्तदिशा दशसु रूपकेषु मध्ये नाटकं प्रकरणं च विहाय अवशिष्टेषु अष्टसंख्याकेषु रूपकप्रकारेषु स्वरचनासामर्थ्यं अयं कविः प्रदर्शयामास । तेषु रूपकप्रकारेषु एकः प्रकारः भाणः ।

दशरूपकोक्तभाणलक्षणमनुसृत्यैव कविनानेन कामविलासभाणः रचितः। अत्र कविना प्रयुक्ता भाषा सुन्दरा सरला च। वर्णनाः मनोहारिण्य कवेः हास्यप्रज्ञा कृतौ सुव्यक्ता च।

ग्रन्थस्यास्य सम्पादकः विद्वद्वरेण्यः एच्. वि. नागराजराव् महाभागः। अयं च व्याकरणशास्त्रे तथा अलङ्कारशास्त्रे निपुणः। आङ्गलभाषायां लब्धप्रवेशः। प्रवचनचतुरः। अनेकाः स्वतन्त्रग्रन्थाः अनुवादग्रन्थाः, तथा व्याख्यानग्रन्थाश्च अनेन रचिताः तथा प्रकाशं नीताः। नैकवारं अमेरिकादेशं गत्वा तत्रत्यानां संस्कृतच्छात्राणां संस्कृतबोधनेन स्वभाषानैपुण्यं प्रदर्शितवान्। आङ्गलसंस्कृतकर्णाटकभाषासु स्वप्रवचनेन श्रोतृन् मन्त्रमुग्धान् करोति। एतादृशाः विद्वांसः अस्मिन् ग्रन्थालये वर्तन्ते इत्यपि सन्तोषस्य विषयः।

अनेन महाभागेन सम्पादितेन कामविलासभाणेन विद्वज्जनाः तोषं प्राप्नुवन्तु इति आशासेऽहम्।

अत्रत्याः निर्देशकमहोदयाः पुस्तकप्रकाशनकर्मणि विदुषः प्रोत्साहयन्ति। इदानीन्तननिर्देशकमहाभागा डा. एच्. पि. देवकी। एषा महाभागा शास्त्रज्ञा, सुसंस्कृता, विद्वत्प्रिया च। अलङ्कारशास्त्रे प्राप्तविद्वत्पदा। मैसूरुविश्वविद्यानिलयस्य संस्कृतविभागे मुख्या च। स्वभावसरला इयं महाभागा सम्पादनादिकर्मसु विदुषां विशेषेण प्रोत्साहदायिनी च। अस्याः अधिकारावधौ नैकविधाः ग्रन्थाः सहृदयहस्तं प्राप्नुयुः इति च आशासेऽहम्।

सुधीविधेयः पण्डितरत्नम्
वेदान्तभूषणम् विद्यावाचस्पतिः
वेदान्तसमर्थः सच्छास्त्रविचक्षणः
न्यायवेदान्तविद्वान्
**आर्. जि. माळगी** एम्. ए.
उपनिर्देशकः
प्राच्यविद्यासंशोधनालयः

दिनाङ्कः - २३-१२-९६
मैसूरु - ५

# पीठिका

कर्णाटकदेशः आ बहोः कालात् विद्यानां कलानां चाश्रय इति प्रसिद्धिं गतः । शङ्कर-रामानुज-पूर्णप्रज्ञाख्याः त्रयोऽप्याचार्याः कर्णाटकदेशे स्वीयान् श्रेष्ठान् ग्रन्थान् रचयांबभूवुः । महाकविर्बिल्हणः कर्णाटकराज्ये आश्रयं प्राप्य महाकाव्यं रचयामास । भूलोकमल्ल इति विख्यातः चालुक्यसोमोश्वरः स्वयं महापण्डितस्सन् मानसोल्लासम् (अभिलषितार्थचिन्तामण्यपरनामकं) विश्वकोशं प्रणिनाय । विजयनगरस्य राजानस्तु कलाश्रया आसन्निति विश्वविदितम् । केळदीसंस्थानस्य नायकाः न केवलं पण्डितान् अपोषयन्, अपि तु स्वयं च भूरिग्रन्थान् विदधिरे । तत उत्तरं मैसूरुसंस्थानस्य राजानः प्रामुख्यम् अलभन्त । तदाश्रये च भूयांसो विद्वांसः कवयश्च दवभाषायां देशभाषायां च नैपुण्यं प्राप्य उत्तमानि काव्यानि रचयित्वा परां ख्यातिं लेभिरे । तादृशेषु कविषु अष्टादशशताब्द्यां लब्धजन्मा, नानाशास्त्रलब्धवर्णः, प्रधानामात्यपदवीभूषितः वेङ्कप्पय्योऽप्येकः । तस्य कृतिषु अन्यतमा कामविलासभाणाख्येयं कृतिः सम्प्रति सहृदयानां करारविन्देषु सादरं समर्प्यते ।

**कर्ता :-**

प्रधानोपनामकः अयं वेङ्कप्पय्यः वेङ्कामात्य इति वेङ्कसुधीरिति, वेङ्कय्य इति च नामभिः प्रथितः । क्रि.श. अष्टादशशताब्द्यां मैसूरुराज्यं कोलाहलनिमग्नमासीत् । हैदर् अली इति विख्यातः एकः प्रबलः सेनानायकः वंशपरम्परागतान् राज्ञः नाममात्रेण रक्षित्वा स्वयं सर्वमधिकारं स्वीकृतवान् । अष्टादशशतकसमाप्तिपर्यन्तमस्य, एतत्सुतस्य च

दशरूपकोक्तभाणलक्षणमनुसृत्यैव कविनानेन कामविलासभाणः रचितः। अत्र कविना प्रयुक्ता भाषा सुन्दरा सरला च। वर्णनाः मनोहारिण्य कवेः हास्यप्रज्ञा कृतौ सुव्यक्ता च।

ग्रन्थस्यास्य सम्पादकः विद्वद्वरेण्यः एच्. वि. नागराजराव् महाभागः । अयं च व्याकरणशास्त्रे तथा अलङ्कारशास्त्रे निपुणः । आङ्गलभाषायां लब्धप्रवेशः । प्रवचनचतुरः । अनेकाः स्वतन्त्रग्रन्थाः अनुवादग्रन्थाः, तथा व्याख्यानग्रन्थाश्च अनेन रचिताः तथा प्रकाशं नीताः। नैकवारं अमेरिकादेशं गत्वा तत्रत्यानां संस्कृतच्छात्राणां संस्कृतबोधनेन स्वभाषानैपुण्यं प्रदर्शितवान्। आङ्गलसंस्कृतकर्णाटकभाषासु स्वप्रवचनेन श्रोतृन् मन्त्रमुग्धान् करोति। एतादृशाः विद्वांसः अस्मिन् ग्रन्थालये वर्तन्ते इत्यपि सन्तोषस्य विषयः।

अनेन महाभागेन सम्पादितेन कामविलासभाणेन विद्वज्जनाः तोषं प्राप्नुवन्तु इति आशासेऽहम् ।

अत्रत्याः निर्देशकमहोदयाः पुस्तकप्रकाशनकर्मणि विदुषः प्रोत्साहयन्ति। इदानीन्तननिर्देशकमहाभागा डा. एच्. पि. देवकी। एषा महाभागा शास्त्रज्ञा, सुसंस्कृता, विद्वत्प्रिया च । अलङ्कारशास्त्रे प्राप्तविद्वत्पदा । मैसूरुविश्वविद्यानिलयस्य संस्कृतविभागे मुख्या च। स्वभावसरला इयं महाभागा सम्पादनादिकर्मसु विदुषां विशेषेण प्रोत्साहदायिनी च। अस्याः अधिकारावधौ नैकविधाः ग्रन्थाः सहृदयहस्तं प्राप्नुयुः इति च आशासेऽहम् ।

सुधीविधेयः पण्डितरत्नम्
वेदान्तभूषणम् विद्यावाचस्पतिः
वेदान्तसमर्थः सच्छास्त्रविचक्षणः
न्यायवेदान्तविद्वान्
**आर्. जि. माळगी** एम्. ए.
उपनिर्देशकः
प्राच्यविद्यासंशोधनालयः

दिनाङ्कः - २३-१२-९६
मैसूरु - ५

# पीठिका

कर्णाटकदेशः आ बहोः कालात् विद्यानां कलानां चाश्रय इति प्रसिद्धिं गतः । शङ्कर-रामानुज-पूर्णप्रज्ञाख्याः त्रयोऽप्याचार्याः कर्णाटकदेशे स्वीयान् श्रेष्ठान् ग्रन्थान् रचयांबभूवुः । महाकविर्बिल्हणः कर्णाटकराज्ये आश्रयं प्राप्य महाकाव्यं रचयामास । भूलोकमल्ल इति विख्यातः चालुक्यसोमोश्वरः स्वयं महापण्डितस्सन् मानसोल्लासम् (अभिलषितार्थचिन्तामण्यपरनामकं) विश्वकोशं प्रणिनाय । विजयनगरस्य राजानस्तु कलाश्रया आसन्निति विश्वविदितम् । केळदीसंस्थानस्य नायकाः न केवलं पण्डितान् अपोषयन्, अपि तु स्वयं च भूरिग्रन्थान् विदधिरे । तत उत्तरं मैसूरुसंस्थानस्य राजानः प्रामुख्यम् अलभन्त । तदाश्रये च भूयांसो विद्वांसः कवयश्च दवभाषायां देशभाषायां च नैपुण्यं प्राप्य उत्तमानि काव्यानि रचयित्वा परां ख्यातिं लेभिरे । तादृशेषु कविषु अष्टादशशताब्द्यां लब्धजन्मा, नानाशास्त्रलब्धवर्णः, प्रधानामात्यपदवीभूषितः वेङ्कप्पय्योऽप्येकः । तस्य कृतिषु अन्यतमा कामविलासभाणाख्येयं कृतिः सम्प्रति सहृदयानां करारविन्देषु सादरं समर्प्यते ।

**कर्ता :-**

प्रधानोपनामकः अयं वेङ्कप्पय्यः वेङ्कामात्य इति वेङ्कसुधीरिति, वेङ्कय्य इति च नामभिः प्रथितः । क्रि.श. अष्टादशशताब्द्यां मैसूरुराज्यं कोलाहलनिमग्नमासीत् । हैदर् अली इति विख्यातः एकः प्रबलः सेनानायकः वंशपरम्परागतान् राज्ञः नाममात्रेण रक्षित्वा स्वयं सर्वमधिकारं स्वीकृतवान् । अष्टादशशतकसमाप्तिपर्यन्तमस्य, एतत्सुतस्य च

टीपुसुल्तानस्याधिकारः सम्प्रावर्तत। अष्टादशशतकस्य अन्तिमे भागे १७९९ आंग्लैः सह युध्यमानः टीपुसुल्तानः अम्रियत । तेन सहैव इस्लामीयः अधिकारोऽपि मैसूरुराज्ये समाप्तिं गतः। युद्धे विजयिनः आंग्लाः परम्परागतं राजानं (तृतीयकृष्णराजाख्यं) सिंहासने उपवेश्य तस्मै राज्याधिकारं ददुः।

एतादृशे संनिवेशे हैदर अलीमहाशयस्य अभिमानपात्रं भूत्वा प्रधानामात्य इति बिरुदेन अलंकृत आसीत् वेङ्कामात्यः । कालक्रमेण दैवदुर्विलासात् वेङ्कामात्ये हैदरअलीत्यस्य तत्पुत्रस्य च अभिमानः क्षीणो बभूव । एतस्मात् कारणात् वेङ्कामात्यो दुःखितो निनायान्तिमं जीवितकालम्।

वेङ्कामात्यस्य जीवनविषये तदीयेभ्य एव वचनेभ्यो ज्ञायते किञ्चित्। तस्य पिता हम्पयमन्त्री, माता च वाबाम्बिका (वामाम्बिका ?)। मैसूरुराज्यस्थे रामपुरीत्याख्ये कस्मिंश्चिद् ग्रामे तस्य निवासः बभूव । तदनन्तरं सः जीवितं मैसूरु श्रीरङ्गपत्तनादिषु यापयामास। श्रीरामे हनूमति च तस्य अधिका भक्तिः । राजकीयरङ्गे लब्धप्रतिष्ठोऽपि, राजकार्येषु बहुधा आसज्यमानोऽपि वेङ्कामात्यः साहित्यक्षेत्रे विपुलां सफलां कृषिं चकार। देववाण्यां देशवाण्यां च तस्य निरर्गलः कविताप्रवाहः पण्डितान् पामरांश्च तोषयामास । साहित्यस्य नानाप्रकारेषु तेन कृतयो रचिताः । तस्य काव्यरचनानैपुण्यं समेषां प्रशंसायाः पात्रमासीत्। ''यः पुंभावसरस्वतीति कवयज्जालेषु जेगीय्यते'' इति तेनैव प्रोक्तं सत्यमेव प्रतिभाति।

वेङ्कामात्येन स्वकृतीनामादौ ''यः श्री रामपुरीविलासवसति'' इति क्वचित् प्रोच्यते । इयं रामपुरी मैसूरुसमीपे वर्तमानस्य चट्टनहळ्ळीत्यस्य ग्रामस्य समीपेऽवर्ततेति केचिदाहुः । श्रीवेङ्कामात्य वंशजास्तु कोरटगेरे मण्डले विद्यमानः अक्की रामपुराख्यो ग्रामोऽस्मदीय इति वदन्ति। वेङ्कप्पय्यः स्वजीवितस्यान्त्यकालं सिराख्यस्य पत्तनस्य गृहे निनायेति ऐतिहासिका आहुः। अत ऊहामहे, टीपुसुल्तानः वेङ्काप्पय्यस्य अधिकारान् अपहृत्य तं स्वग्रामं प्रेषितवान् इति। एतद्विषये इतिहासाभिज्ञैरधिकं विवेचनीयम्।

## कृतयः -

वेङ्कामात्यः नाटकं प्रकरणं च हित्वा अन्येषु सर्वेषु रूपकप्रकारेषु स्वलेखनीशक्तिं दर्शयामास। तथैव पद्यकाव्यं, गद्यकाव्यम्, अलङ्कारग्रन्थं, चम्पूकाव्यं, स्तोत्राणि च रचयामास।

## कृतीनां नामानि -

१) कामविलासभाणः
२) कुक्षिम्भरिभैक्षवप्रहसनम्
३) महेन्द्रविजयडिमः
४) वीरराघवव्यायोगः
५) लक्ष्मीस्वयंवरसमवकारः
६) सीताकल्याणवीथी
७) रुक्मिणीमाधवाङ्कः
८) उर्वशीसार्वभौमेहामृगः
९) जगन्नाथविजयम् (पद्यकाव्यम्)
१०) कुशलवचम्पूः
११) सुधाझरी (गद्यकाव्यम्)
१२) अलङ्कारमणिदर्पणः
१३) चिदद्वैतिका
१४) हनुमच्छतकम्।

अपि च, कन्नडभाषायां कविनानेन कर्णाटरामायणं, सीताविवाहः, हनुमत्स्तोत्रम् इत्यादयः कृतयो रचिताः । एतेनास्य प्रतिभावैशद्यं विज्ञायते।

## भाणः

संस्कृतसाहित्ये दृश्यकाव्यं रूपकमिति अभिधीयते। तच्च रूपकं दशधा विभक्तम्। यथोक्तं दशरूपके -

नाटकं सप्रकरणं भाणः प्रहसनं डिमः।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ।। इति। ( १.८)

तत्र भाणस्य लक्षणमित्थं वर्णितम् -

भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा।
यत्रोपवर्णयेदेको निपुणः पण्डितो विटः ।।

सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः।
सूचयेद् वीरश्रृङ्गारौ शौर्यसौभाग्यसंस्तवैः ॥

भूयसा भारती वृत्तिरेकाङ्कं वस्तु कल्पितम्।
मुखनिर्वहणे साङ्गे लास्याङ्गानि दशापि च ॥

(दशरूपके ४९-५१)

व्याख्यानकारो धनञ्जयो वदति - "धूर्ताश्चोरद्यूतकारादयस्तेषां चरितं यत्रैक एव विटः स्वकृतं परकृतं वोपवर्णयति, स भारतीवृत्तिप्रधानत्वाद् भाणः" इति। एतत् सर्वं भरतनाट्यशास्त्रमूलमेव, यतस्तत्र भाणः इत्थं लक्षितः -

"धूर्ताश्चोरद्यूतकारादयस्तेषां चरितं यत्रैक एव विटः स्वकृतं परकृतं वोपवर्णयति, स भारतीवृत्तिप्रधानत्वाद् भाणः" इति। भाणस्य रचना न सुलभा। प्राचीनोऽयं श्लोकः श्रूयताम् -

वररुचिरीश्वरदत्तः श्यामिलकः शूद्रकश्च चत्वारः।
एते भाणान् बभणुः का शक्तिः कालिदासस्य ॥

वेङ्कप्पय्येन भाणस्य लक्षणं पूर्णतः अनुसृतम् इति वक्तुं शक्यते। अत्र नायकः पल्लवतिलकः स्वानुभूतमेव आकाशभाषितसाहाय्येन सम्यग् वर्णयति। सः स्वयं धूर्तो विटः। तस्य सुहृदः कमलाक्षादयोऽपि तादृशाः।

## कामविलासभाण :

कामविलासभाणस्य कामकलाविलासभाण इत्यापि नामधेयं क्वचिद् दृश्यते। अत्र कविना प्रयुक्ता भाषा सरला सुभगा च। वर्णनाः चेतोहारिण्यः। अष्टादशशतके स्थितं समाजं सम्यक् प्रतिबिम्बयति कविः। तस्य हास्य-प्रज्ञा तत्र तत्र सुव्यक्ता। भाणस्य विटगणिकादिपात्रभरितत्वात् तत्र तत्र शृङ्गाराभासो विजृम्भते, तथैव क्वचित् क्वचित् अश्लीलायमानानि वाक्यानि च दृश्यन्ते, तथापि साहजिकं तत् प्रहसनभाणादिषु इति सहृदयैराकलनीयम्।

अशीत्यधिकाः भाणाः प्राचीनकविभिः प्रणीताः प्रपञ्चे प्रथिताः[1]। तेषु पद्मप्राभृतक - उभयाभिसारिका - पादताडितक - धूर्तविटसंवादभाणाः चतुर्भाणीनाम्ना प्रसिद्धाः । अन्ये च अनङ्गजीवन-श्रृङ्गारदीपिका-शृङ्गारशृङ्गाटकादयः नातिप्रसिद्धाः उपलभ्यन्ते। भाणे एक एव आ प्रारम्भात् समाप्तिपर्यन्तं भणति इति कारणात् रङ्गे अस्य रूपकप्रकारस्य नातीव जनप्रियता इति अस्माकं प्रतिभाति । अनुत्तमशृङ्गारप्राचुर्याच्च जनाः तत्र नाधिकं रज्यन्त इति च भावयामः।

## उपयुक्ताः मातृकाः

प्रकृतस्य संस्करणस्य सिद्धीकरणाय चतस्रो मातृकाः उपयुक्ताः। तासु तिस्रः प्राच्यविद्यासंशोधनालयस्थाः। यथा -

१) ‘‘क’’ संज्ञिता मातृका कर्गजपत्रमयी (B १९२ अङ्किता), अस्यां मातृकायां कामविलासभाणेन साकं वेङ्कामात्यस्य अन्यान्यपि षट् रूपकाणि लिखितानि सन्ति । आदौ २१ पत्रेषु कामविलासभाणः लिखितोऽस्ति देवनागरीलिप्याम् । सम्पूर्णो ग्रन्थोऽत्रोपलभ्यते । तत्र तत्र पदानि वाक्यानि च लुप्तानि।

२) ‘‘ख’’ संज्ञिता मातृका कर्गजपत्रमयी (B ३४१ अङ्किता), अस्यां मातृकायां केवलं कामविलासभाणो लिखितोऽस्ति कन्नडलिप्याम्। सम्पूर्णो ग्रन्थोऽत्रोपलभ्यते। तत्र तत्र पदानि वाक्यानि च लुप्तानि।

३) ‘‘ग’’ संज्ञिता मातृका ताळपत्रमयी (P २५८६ अङ्किता), अस्यां मातृकायां कामविलासभाणेन साकमन्यान्यपि वेङ्कप्पय्यकृतानि रूपकाणि लिखितानि। ११४ - १२५ तमपत्रेषु कामविलासभाणो दृश्यते। इयमेव मातृका सर्वासां मध्ये शुद्धा, श्रेष्ठा च। अन्यासु लुप्तानि पदानि वाक्यानि चात्र लब्धानि। अक्षराणि नन्दिनागरीलिप्यां सन्ति।

---

१. एतेषां नामानि अनुबन्धे दत्तानि।

४) ''घ'' संज्ञिता मातृका तु मैसूरु-महाराजस्य आस्थानसरस्वती-भाण्डागारे स्थिता ताळपत्रमयी। अस्यां च कामविलासभाणेन साकं रूपकान्तराणि लिखितानि वर्तन्ते। आन्ध्रलिपिरत्र उपयुक्ता। पत्राणि प्रायशो भग्नानि। क-ख संज्ञयोः पुस्तकयोः यानि पदानि वाक्यानि वा लुप्तानि प्रायशः तानि अस्यां मातृकायां च लुप्तानि।

एतासां चतसृणां मातृकाणां साहाय्येन सम्पदितः कामविलासभाणः सम्प्रति प्राच्यविद्यासंशोधनालयेन प्रकाशितः। कर्णाटकराज्ये प्रथितेन वेङ्कामात्येन रचितानां सर्वेषां ग्रन्थानां प्रकाशने दर्शितोत्साहैः प्राच्यविद्यासंशोधनालयाधिकारिभिः दत्तमादेशमनुसृत्य रूपकमिदं सम्पादितम्। एतद्विषये सामयिकं मार्गप्रदर्शनं विधाय उपकृतवतां प्राक्तननिर्देशकानां मान्यानां डा. एच्.पि. मल्लेदेवरुमहाशयानां डा. के. राजगोपालाचार्यमहाभागानां तथा संस्थायाः उपनिर्देशकानां विदुषां पण्डितरत्नबिरुदभाजां आर्.जि. माळगि महोदयानां च साहाय्यं सकार्तज्ञ्यं संस्मरामि। सम्प्रति निर्देशकपदवीमलङ्कुर्वाणां डा. एच्.पि. देवकीमहोदयां च वन्दे। संस्थायाः विद्वांसश्च तत्र तत्र संशयनिरसनेनोपकृतवन्त इति तेषामप्यहं कृतज्ञोऽस्मि। आस्थानसरस्वतीभण्डागारस्य व्यवस्थापकाः श्री कृष्णमूर्तिमहाशयाश्च मदीयं कार्तज्ञ्यमर्हन्ति।

कृतेऽपि महति प्रयत्ने केचन पाठाः अज्ञेयार्थाः अस्पष्टार्था वा अवस्थिताः। तदर्थं विदुषां क्षमां याचे। ग्रन्थोऽयं सहृदयहृदयानि उल्लासयत्विति चाशासे।

इति
विद्वद्वशंवदः
**एच्.वि. नागराजराव्**

# ಕಾಮವಿಲಾಸ ಭಾಣ

ಹದಿನೇಳನೆಯ ಶತಮಾನದ ಉತ್ತರಾರ್ಧದಲ್ಲಿ ಮೈಸೂರು ರಾಜ್ಯವನ್ನು ಹೈದರ್ ಅಲಿ ಮತ್ತು ಟೀಪುಸುಲ್ತಾನರು ಆಳಿದರು. ಆ ಕಾಲದಲ್ಲಿ 'ಪ್ರಧಾನಿ' ಎಂಬ ಅಧಿಕಾರದಲ್ಲಿದ್ದು ಸಂಸ್ಕೃತ ಹಾಗೂ ಕನ್ನಡಗಳಲ್ಲಿ ಹೆಚ್ಚಿನ ಪಾಂಡಿತ್ಯವನ್ನು ಗಳಿಸಿದ್ದ ವೆಂಕಪ್ಪಯ್ಯ ಎಂಬ ವಿದ್ವಾಂಸನು ಅನೇಕ ಗ್ರಂಥಗಳನ್ನು ರಚಿಸಿ 'ಪುಂಭಾವ ಸರಸ್ವತೀ' ಎಂದು ಕೀರ್ತಿಯನ್ನು ಪಡೆದಿದ್ದನು. ಈತನ ವೈಯಕ್ತಿಕ ಜೀವನದ ಬಗೆಗೆ ನಮಗೆ ಹೆಚ್ಚಿನ ವಿಷಯಗಳು ತಿಳಿದಿಲ್ಲ. ಆತನ ಗ್ರಂಥಗಳ ಪ್ರಸ್ತಾವನೆಯಲ್ಲಿ ಕೆಲವು ವಿಚಾರಗಳನ್ನು ಹೇಳಿರುವುದರಿಂದ ಅಷ್ಟನ್ನು ನಿಷ್ಕೃಷ್ಟವಾಗಿ ತಿಳಿದುಕೊಳ್ಳಬಹುದು.

ವೆಂಕಪ್ಪಯ್ಯನು ಶ್ರೀರಾಮನ ಭಕ್ತ. ಅದೇ ರೀತಿಯಾಗಿ ಹನುಮಂತನಲ್ಲೂ ಆತನಿಗೆ ಹೆಚ್ಚಾದ ಭಕ್ತಿಯಿತ್ತು. ತಂದೆ ಹಂಪಯಾರ್ಯ, ತಾಯಿ ವಾಬಾಂಬಿಕೆ. ಆತನ ಮೂಲ ಸ್ಥಳ ರಾಮಪುರ. ಈ ರಾಮಪುರವು ಮೈಸೂರಿನ ಸಮೀಪದ ಒಂದು ಹಳ್ಳಿಯೆಂದು ಶ್ರೀ ಎಂ.ಪಿ.ಎಲ್. ಶಾಸ್ತ್ರಿ ಮುಂತಾದ ವಿದ್ವಾಂಸರು ಊಹಿಸಿದ್ದಾರೆ. ಆದರೆ ವೆಂಕಪ್ಪಯ್ಯನ ವಂಶಸ್ಥರು ರಾಮಪುರವೆಂದರೆ ಕೊರಟಗೆರೆ ತಾಲೂಕಿನ ಅಕ್ಕಿರಾಮಪುರವೆಂದು ಹೇಳುತ್ತಾರೆ. ಇದು ಹೆಚ್ಚು ಸಂಭವನೀಯವೆಂದು ನಮಗೆ ತೋರುತ್ತದೆ. ಏಕೆಂದರೆ ವೆಂಕಪ್ಪಯ್ಯನು ತಾರುಣ್ಯದಲ್ಲಿ ಬಿದನೂರಿನ ರಾಣಿಯ ಆಸ್ಥಾನದಲ್ಲಿ ಉತ್ತಮ ಅಧಿಕಾರದಲ್ಲಿದ್ದನೆಂದು ತಿಳಿದುಬರುತ್ತದೆ. ಬಿದನೂರು ಇಕ್ಕೇರಿ ಸಂಸ್ಥಾನದ ರಾಜಧಾನಿಯಾಗಿತ್ತು. ಅಲ್ಲಿ ಹದಿನೆಂಟನೆಯ ಶತಮಾನದ ಮಧ್ಯಭಾಗದಲ್ಲಿ ರಾಣಿ ವೀರಮ್ಮಾಜಿ ಆಳುತ್ತಿದ್ದಳು. ಈ ಪಟ್ಟಣವು ಕೊರಟಗೆರೆಗೆ ಸಮೀಪವಾಗುತ್ತದೆ. ಮೈಸೂರಿನ ಬಳಿಯ ಹಳ್ಳಿಯ ನಿವಾಸಿಯಾಗಿದ್ದಿದ್ದರೆ, ವೆಂಕಪ್ಪಯ್ಯನು ವೃತ್ತಿಗಾಗಿ ಬಿದನೂರಿನವರೆಗೆ ಹೋಗುವ ಸಂದರ್ಭ ಪ್ರಾಯಶಃ ಬರುತ್ತಿರಲಿಲ್ಲ. ವೆಂಕಪ್ಪಯ್ಯನ ತಂದೆಯೂ ಹಂಪಯಾಮಾತ್ಯ ಎಂಬ ಹೆಸರಿನಿಂದ ವ್ಯವಹರಿಸಲ್ಪಡುವುದು ಕಂಡುಬರುವುದರಿಂದ ಪ್ರಧಾನ ಅಥವಾ ಪ್ರಧಾನಿ ಎನ್ನುವುದು

ಇವರ ವಂಶಜರಿಗೆಲ್ಲರಿಗೂ ಸಲ್ಲುವ ಉಪನಾಮ ಎಂದು ತೋರುತ್ತದೆ. ಚಿಕ್ಕಂದಿನಲ್ಲೇ ಕನ್ನಡ, ತೆಲುಗು ಮತ್ತು ಸಂಸ್ಕೃತ ಭಾಷೆಗಳಲ್ಲಿ ಉತ್ತಮ ಪಾಂಡಿತ್ಯವನ್ನು ವೆಂಕಪ್ಪಯ್ಯನು ಪಡೆದಿದ್ದನೆಂಬುವುದರಲ್ಲಿ ಸಂದೇಹವಿಲ್ಲ.

ಈತನು ರಚಿಸಿರುವ ಗ್ರಂಥಗಳನ್ನು ನೋಡಿದರೆ, ಸಾಹಿತ್ಯ, ವ್ಯಾಕರಣ ಮತ್ತು ವೇದಾಂತಗಳಲ್ಲಿ ಅಪಾರವಾದ ಪಾಂಡಿತ್ಯವನ್ನು ಪಡೆದಿದ್ದನೆಂದು ತಿಳಿದುಬರುತ್ತದೆ. ಕವಿಗಳಂತೂ ಈತನನ್ನು ಹೊಗಳುತ್ತಿದ್ದರಂತೆ. 'ಆ ಸೇತುಶೀತಾಚಲ' ದೇಶದ ಯಾಚಕರೆಲ್ಲಾ ಬಂದು ವೆಂಕಪ್ಪಯ್ಯನಿಂದ ತಮ್ಮ ಇಷ್ಟಾರ್ಥಗಳನ್ನು ಈಡೇರಿಸಿಕೊಂಡು ಹೋಗುತ್ತಿದ್ದರಂತೆ. ಕಾಮವಿಲಾಸ ಭಾಣದ ಪ್ರಸ್ತಾವನೆಯಲ್ಲಿ ಬರುವ ಪದ್ಯದಲ್ಲಿ ಈ ವಿಷಯವನ್ನು ವೆಂಕಪ್ಪಯ್ಯನು ಹೆಮ್ಮೆಯಿಂದ ಹೇಳಿಕೊಂಡಿದ್ದಾನೆ.

ಶಬ್ದಾರ್ಥೋಭಯಮರ್ಮಸೌರಭಕಲಾಂ ಜಾನನ್ ರಸಸ್ಯ ಧ್ವನೇಃ
ಯಃ ಪುಂಭಾವಸರಸ್ವತೀತಿ ಕವಯಜ್ಞಾಲೇಷು ಜೇಗೀಯ್ಯತೇ ।
ಆಶಾಸ್ಯಾರ್ಪಣತಃ ಸಮಾಗತವತಾಮಾಸೇತು ಶೀತಾಚಲಂ
ಸಂಚಿನ್ವನ್ ವಿಮಲಂ ಯಶೋ ವಿಜಯತೇ ಧರ್ಮೋ ವಪುಷ್ಮಾನಿವ ॥

ವೆಂಕಪ್ಪಯ್ಯನು ನಡೆಸುತ್ತಿದ್ದ ಕವಿಸಭೆಗಳಿಗೆ ಸುಮ್ಮನೆ ಬಂದವರೂ ಸರಸಕವಿಗಳಾಗಿಬಿಡುತ್ತಿದ್ದರೆಂದ ಮೇಲೆ ಆತನ ಪ್ರಭಾವಾತಿಶಯವನ್ನು ವರ್ಣಿಸುವುದೆಂತು ? (ಕಿಂ ನ ಶ್ರುತಂ ಸಕೃದಪ್ಯಸ್ಯ ಸಭಾಂ ಪ್ರವಿಶಂತಃ ಸದ್ಯಸ್ಸರಸಕವಯೋ ಭವಂತಿ, ಕಿಂ ಪುನರ್ಭಾರತೀಪುರುಷಾವತಾರಸ್ಯ ತಸ್ಯ ಕವೇಃ ?). ಕೇವಲ ಕವಿತ್ವವೇ ಅಲ್ಲ, ಸತತವಾಗಿ ಈ ವೆಂಕಾಮಾತ್ಯನು ಬ್ರಹ್ಮಚಿಂತನೆಯಲ್ಲಿ ಕಾಲವನ್ನು ಕಳೆಯುತ್ತಿದ್ದುದಾಗಿ ಕೂಡ ತಾನೇ ಹೇಳಿಕೊಂಡಿದ್ದಾನೆ. (ಕಥಮಸ್ಯ ಸಂತತಪರಿಶೀಲ್ಯಮಾನ ಬ್ರಹ್ಮವಿದ್ಯಾರಹಸ್ಯಸ್ಯ, ಪ್ರತಿಕೂಲಪ್ರವರ್ಧಮಾನ ಲಕ್ಷ್ಮೀವಿಲಾಸಸಹಸ್ರಮುದಿತಸ್ಯ ಚ ರೂಪಕೇಽಪಿ ಸರಸ ಸಂದರ್ಭಾ ಸರಸ್ವತೀ ?) ಈತನು ಜನಿಸಿದುದು ಮೌನಭಾರ್ಗವಕುಲದಲ್ಲಿ. (ವಿಶ್ವಾನಂದಿನಿ ಮೌನಭಾರ್ಗವಕುಲೇ ದುಗ್ಧಾಂಬುಧೌ ಪ್ರೋಜ್ವಲೇ ಹಂಪಾರ್ಯಾಭಿಧಮಂತ್ರಿಣಃ ಸಮುದಿತೋ ವಾಚಾಂಬಿಕಾಗರ್ಭತಃ) ಆದರೂ ಸರಸ್ವತಿಯ ಪೂರ್ಣಾನುಗ್ರಹವನ್ನು ಪಡೆದು ಕನ್ನಡ, ತೆಲುಗು, ಮರಾಠಿ, ಸಂಸ್ಕೃತ ಮುಂತಾದ ಅನೇಕ ಭಾಷೆಗಳಲ್ಲಿ ಪಾಂಡಿತ್ಯವನ್ನು ಪಡೆದು ಹುಲುಸಾದ ಕಾವ್ಯಕೃಷಿಯನ್ನು ಮಾಡಿರುವುದು ಅಚ್ಚರಿಯ ಸಂಗತಿ.

ಪ್ರಾಯಶಃ ಯಾವುದೋ ರಾಜ್ಯದಲ್ಲಿ ವೆಂಕಪ್ಪಯ್ಯನ ವಂಶಸ್ಥರು ಮಂತ್ರಿಗಳಾಗಿ ಪರಂಪರಾನುಗತವಾಗಿ ಸೇವೆಯನ್ನು ಸಲ್ಲಿಸುತ್ತಿದ್ದಿರಬಹುದು. ಇತಿಹಾಸಕಾರರ ಅಭಿಪ್ರಾಯಾನುಸಾರವಾಗಿ ವೆಂಕಪ್ಪಯ್ಯನು ಹದಿನೆಂಟನೆಯ ಶತಮಾನದ ಮಧ್ಯಭಾಗದಲ್ಲಿ, ಇನ್ನೂ ತರುಣನಾಗಿದ್ದಾಗಲೇ, ಬಿದನೂರಿನ ರಾಣಿ ವೀರಮ್ಮಾಜಿಯ ಆಡಳಿತದಲ್ಲಿ ಪ್ರಮುಖ ಸ್ಥಾನದಲ್ಲಿ ಅಧಿಕಾರವನ್ನು ವಹಿಸಿದ್ದನು[1]. 1763ನೆಯ ಇಸವಿಯ ಜನವರಿ ತಿಂಗಳಲ್ಲಿ ಮೈಸೂರಿನ ಹೈದರ್ ಅಲಿಯು ಬಿದನೂರನ್ನು ಆಕ್ರಮಿಸಿ ತನ್ನ ವಶಕ್ಕೆ ತೆಗೆದುಕೊಂಡನು[2]. ಆಮೇಲೆ ವೆಂಕಪ್ಪಯ್ಯನ ಜ್ಞಾನ-ಸಾಮರ್ಥ್ಯಗಳನ್ನು ನೋಡಿ ಮೆಚ್ಚಿದ ಹೈದರ್ ಅಲಿಯು ಅವನನ್ನೇ ಬಿದನೂರಿನ ಆಡಳಿತದ ಹೊಣೆಯನ್ನು ಹೊರಲು ನೇಮಿಸಿದನು[3]. ಅನಂತರದಲ್ಲಿ ವೆಂಕಪ್ಪಯ್ಯನ ಚಾತುರ್ಯವನ್ನೂ ಯುದ್ಧಕಲಾನೈಪುಣ್ಯವನ್ನೂ ಕಂಡು ಅವನನ್ನು ಶ್ರೀರಂಗಪಟ್ಟಣಕ್ಕೆ ಕರೆಸಿಕೊಂಡು ಅಮಾತ್ಯ ಪದವಿಯನ್ನು ನೀಡಿದನು. ವೆಂಕಪ್ಪಯ್ಯನು ಅನೇಕ ಯುದ್ಧಗಳಲ್ಲಿ ಪ್ರತ್ಯಕ್ಷವಾಗಿ ಭಾಗವಹಿಸಿದ್ದ ಬಗೆಗೆ ದಾಖಲೆಗಳು ದೊರೆಯುತ್ತವೆ. ಪೂನಾದಲ್ಲಿದ್ದ ಮರಾಠಾ ಪೇಶ್ವೆಗಳೊಡನೆ ಸಂಧಾನಗಳನ್ನು ಮಾಡಲು ರಾಜದೂತನನ್ನಾಗಿ ವೆಂಕಪ್ಪಯ್ಯನನ್ನು ಕಳಿಸಿದುದಾಗಿಯೂ ತಿಳಿದು ಬರುತ್ತದೆ. ಈ ರೀತಿ ಹೈದರ್ ಅಲಿಯ ಮನ್ನಣೆಯನ್ನು ಗಳಿಸಿ ಉನ್ನತ ಪದವಿಯಲ್ಲಿ ಮೆರೆದರೂ, ಈ ವೈಭವ ವೆಂಕಾಮಾತ್ಯನಿಗೆ ದೀರ್ಘಕಾಲ ಉಳಿಯಲಿಲ್ಲ. ಚಾಡಿಕೋರರ ಮಾತನ್ನು ನಂಬಿದ ಹೈದರ್ ಅಲಿ ವೆಂಕಪ್ಪಯ್ಯನ ಬಿರುದುಗಳನ್ನು ಕಿತ್ತುಕೊಂಡು ಅವನನ್ನು ಸೆರೆಮನೆಗೆ ಕಳಿಸಿದನು.

ಈ ಘಟನೆಯಿಂದ ವೆಂಕಪ್ಪಯ್ಯನ ದೇಹಾರೋಗ್ಯ ಕ್ಷೀಣಿಸಿತು. ಸೆರೆಮನೆಯ

---

1. Well educated from early life in the arts and letters of the Country, he appears to have entered the service under Rani Virammaji, about 1757, as an agent (History of Mysore, Volume II, by C. Hayavadana Rao, P-478)

2. "Bednur fell , as we have sen, about the third week of January 1763, and Haider's arrangements for its future administration took about six months" Ibid, P-470.

3. There is, however, hardly any doubt that the office of Dewan was first entrusted to Pradhan Venkappaiah, who by talent and training was well fitted for the post. Ibid PP- 467-68.

ವಾಸ ಅವನನ್ನು ಕಂಗೆಡಿಸಿತು. ಅಪ್ಪಾಜಿ ರಾಮ್ ಎಂಬ ಸರದಾರನು ವೆಂಕಪ್ಪಯ್ಯನ ಪರವಾಗಿ ಹೈದರನಿಗೆ ಮಾಡಿದ ವಿಜ್ಞಾಪನೆಯಿಂದ ಅವನನ್ನು ಹೈದರ್ ಸೆರೆಯಿಂದ ಬಿಡಿಸಿದನು. ಆದರೂ, ವೆಂಕಪ್ಪಯ್ಯನು ಚೇತರಿಸಿಕೊಳ್ಳಲಾಗಲಿಲ್ಲ. 1782ರ ನವೆಂಬರ್ ತಿಂಗಳಿನಲ್ಲಿ ಅವನು ಕೊನೆಯ ಉಸಿರನ್ನೆಳೆದನು[1].

ಈ ರೀತಿಯಾಗಿ ರಾಜಕೀಯದ ತಳಮಳದಲ್ಲಿ ಸಿಕ್ಕಿಹಾಕಿಕೊಂಡು ಹೆಚ್ಚಿನ ಕಷ್ಟನಷ್ಟಗಳಿಗೆ ಗುರಿಯಾಗಿದ್ದರೂ ವೆಂಕಪ್ಪಯ್ಯನು ವಿದ್ಯಾಕ್ಷೇತ್ರದಲ್ಲಿ ಮಾಡಿದ ಸಾಧನೆಗಳು ಮೆಚ್ಚುಗೆಗೆ ಅರ್ಹವಾಗಿವೆ. ಶ್ರೀರಾಮನಲ್ಲೂ, ಅವನ ಭಕ್ತ ಆಂಜನೇಯನಲ್ಲೂ ವೆಂಕಾಮಾತ್ಯನು ಅನನ್ಯವಾದ ಭಕ್ತಿ ಇರಿಸಿದ್ದುದರಿಂದಲೇ ಅವನಿಗೆ ಅಂಥ ಅತಿಶಯವಾದ ಕವಿತ್ವ-ವಿದ್ವತ್ತ್ವಗಳು ಪ್ರಾಪ್ತವಾಗಿದ್ದುವೆಂದು ಅವನೇ ಹೇಳುತ್ತಾನೆ. (ಇತಿ ಶ್ರೀಮದ್‌ರಾಮಪುರಾಧೀಶಶ್ರೀರಘುನಾಥಚರಣ ದ್ವಂದ್ವಾರಾಧನಲಬ್ಧಸಂಪತ್‌ಸಾರಸ್ವತವೈಭವ ವಿಶ್ವಜನೀನವಿದ್ಯ ಶ್ರೀ ವೇಂಕಯಾರ್ಯ ಪ್ರಧಾನಶಿರೋಮಣಿವಿರಚಿತೇ ಶ್ರೀಮತಿ ಮಹಾಕಾವ್ಯೇ. ಜಗನ್ನಾಥ ವಿಜಯೇ .....). ಅವನ ಕೆಲವು ಕೃತಿಗಳು ಇಂದಿಗೂ ಉಪಲಬ್ಧವಾಗಿರುವುದು ಲೋಕದ ಸೌಭಾಗ್ಯ.

ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ವೆಂಕಾಮಾತ್ಯನು ದೃಶ್ಯ, ಶ್ರವ್ಯ ಎಂಬ ಎರಡು ಪ್ರಕಾರಗಳಲ್ಲೂ ಕೃತಿಗಳನ್ನು ರಚಿಸಿದ್ದಾನೆ. ಸಂಸ್ಕೃತದಲ್ಲಿ ಅತ್ಯಂತ ಗೌರವಕ್ಕೆ ಪಾತ್ರವಾದ ಕಾವ್ಯಪ್ರಕಾರವೆಂದರೆ ಮಹಾಕಾವ್ಯ. **'ಜಗನ್ನಾಥವಿಜಯ'**ವೆಂಬ ಮಹಾಕಾವ್ಯವನ್ನು ರಚಿಸಿ ವೆಂಕಪ್ಪಯ್ಯನು ಮಹಾಕವಿಯಾಗಲು ತಾನು ಯೋಗ್ಯನೆಂದು ತೋರಿಸಿಕೊಟ್ಟಿದ್ದಾನೆ. ಈ ಮಹಾಕಾವ್ಯವು ಭಟ್ಟಿಕಾವ್ಯದ ರೀತಿಯಲ್ಲಿ ವ್ಯಾಕರಣವನ್ನು ಅಳವಡಿಸಿಕೊಂಡಿರುವ ಕೃತಿ.

---

1. He (Haider) deprived him (Venkappayya) of his office in 1779 on the ground of alleged misuse of power and forced him to make good revenues to the extent of 60,000 varahas, and after that sum had been collected from him, he was insulted and thrown into prison in Srirangapatam, his authority being withdrawn, though left with the empty title of Pradhan with an allowance of Rs. 1000.At the intercession of Appajiram, he was, however, released from prison, and summoned for military service, but died of diabetes before joining in November 1782. Ibid. P-480.

ಸನ್, ಯಙ್, ಯಙ್‌ಲುಕ್ ಮುಂತಾದ ವಿಶಿಷ್ಟ ಪ್ರಯೋಗಗಳನ್ನು ಲೀಲಾಜಾಲವಾಗಿ ವೆಂಕಪ್ಪಯ್ಯನು ಇದರಲ್ಲಿ ಪ್ರಯೋಗಿಸಿರುವುದನ್ನು ನೋಡಿದಾಗ ಸಂಸ್ಕೃತ ವ್ಯಾಕರಣದ ಮೇಲೆ ಅವನಿಗಿದ್ದ ಅಪ್ರತಿಮ ಪ್ರಭುತ್ವವನ್ನು ಕಾಣಬಹುದು.

''ಗದ್ಯಂ ಕವೀನಾಂ ನಿಕಷಂ ವದಂತಿ'' (ಗದ್ಯವೇ ಕವಿಗಳ ಸಾಮರ್ಥ್ಯಕ್ಕೆ ಒರೆಗಲ್ಲು) ಎಂಬ ನಾಣ್ಣುಡಿಯಂತೆ ಗದ್ಯರಚನೆಯಲ್ಲೂ ತನ್ನ ಸಾಮರ್ಥ್ಯವನ್ನು ತೋರಿಸಲು ವೆಂಕಪ್ಪಯ್ಯನು **'ಸುಧಾಝರೀ'** ಎಂಬ ಗದ್ಯಕಾವ್ಯವನ್ನು ರಚಿಸಿದ್ದಾನೆ. ಇದು ಬಾಣನ ಕಾದಂಬರಿಯನ್ನು ಹೋಲುವ ಶ್ರೇಷ್ಠಮಟ್ಟದ ಕೃತಿ. ಗದ್ಯ-ಪದ್ಯಗಳ ಮಿಶ್ರಣವಾದ ಚಂಪೂವಿನ ಉದಾಹರಣೆಯಾಗಿ ಅವನು 'ಕುಶಲವಚಂಪೂ' ಎಂಬ ಗ್ರಂಥವನ್ನೂ ಪ್ರೌಢಶೈಲಿಯಲ್ಲಿ ರಚಿಸಿದ್ದಾನೆ.

ನಾಟಕಂ ಸಪ್ರಕರಣಂ ಭಾಣಃ ಪ್ರಹಸನಂ ಡಿಮಃ ।
ವ್ಯಾಯೋಗ ಸಮವಕಾರೌ ವೀಥ್ಯಂಕೇಹಾಮೃಗಾ ದಶ ॥

ಎಂದು ಹತ್ತು ವಿಧವಾದ ರೂಪಕಗಳನ್ನು ಶಾಸ್ತ್ರದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಇವುಗಳಲ್ಲಿ ನಾಟಕ ಮತ್ತು ಪ್ರಕರಣಗಳನ್ನು ಬಿಟ್ಟು ಉಳಿದ ಎಂಟು ರೂಪಕಪ್ರಕಾರಗಳಿಗೂ ವೆಂಕಾಮಾತ್ಯನು ರಚಿಸಿದ ಕೃತಿಗಳು ಸಿಕ್ಕಿವೆ. **ಕಾಮವಿಲಾಸಭಾಣ, ಕುಕ್ಷಿಂಭರಿಭೈಕ್ಷವಪ್ರಹಸನ, ಮಹೇಂದ್ರವಿಜಯಡಿಮ, ವೀರರಾಘವ-ವ್ಯಾಯೋಗ, ಲಕ್ಷ್ಮೀಸ್ವಯಂವರಸಮವಕಾರ, ಸೀತಾಕಲ್ಯಾಣವೀಥೀ, ರುಕ್ಮಿಣೀಮಾಧವಾಂಕ, ಉರ್ವಶೀಸಾರ್ವಭೌಮೇಹಾಮೃಗ** -ಎಂಬ ಎಂಟು ಕೃತಿಗಳೂ ಈಗ ಉಪಲಬ್ಧವಾಗಿದ್ದು ಮೈಸೂರಿನ ಪ್ರಾಚ್ಯವಿದ್ಯಾ ಸಂಶೋಧನಾಲಯದಿಂದ ಪ್ರಕಟಗೊಳ್ಳುತ್ತಿವೆ.

**ಹನುಮಚ್ಛತಕ** ಅಥಾ **ಆಂಜನೇಯ ಶತಕ**ವೆಂಬ ಸ್ತೋತ್ರವೂ ವೆಂಕಪ್ಪಯ್ಯ ರಚಿತವಾಗಿದೆ. ಅಲ್ಲದೆ ಶಾಸ್ತ್ರಗಳಲ್ಲೂ ಪ್ರಾವೀಣ್ಯಪಡೆದ ಈತನು **'ಚಿದದ್ವೈತಿಕಾ'** ಎಂಬ ಅದ್ವೈತವೇದಾಂತ ಗ್ರಂಥವನ್ನೂ, **'ಅಲಂಕಾರಮಣಿದರ್ಪಣ'** ಎಂಬ ಅಲಂಕಾರಶಾಸ್ತ್ರ ಗ್ರಂಥವನ್ನೂ ರಚಿಸಿದ್ದಾಗಿ ತಿಳಿದುಬರುತ್ತದೆ.

ಕನ್ನಡದಲ್ಲಿ **ಕರ್ಣಾಟರಾಮಾಯಣ, ಹನುಮಜ್ಜಯ,** ಸೀತಾವಿವಾಹ ಇತ್ಯಾದಿ ಕೃತಿಗಳನ್ನು ರಚಿಸಿರುವುದೂ ಅವನ ಮಾತುಗಳಿಂದಲೇ ತಿಳಿದುಬರುತ್ತದೆ.

**ಕಾಮವಿಲಾಸಭಾಣ :** ಹಿಂದೆ ತಿಳಿಸಿದ ಹತ್ತು ಪ್ರಕಾರದ ಸಂಸ್ಕೃತ ರೂಪಕಗಳಲ್ಲಿ ಭಾಣವೆಂಬುದು ಒಂದು. ಇದರ ಲಕ್ಷಣವನ್ನು ನಾಟ್ಯಶಾಸ್ತ್ರದಲ್ಲಿ ಭರತನು ಹೀಗೆ ಹೇಳಿದ್ದಾನೆ -

ಭಾಣಸ್ಯಾಪಿ ಹಿ ಲಕ್ಷಣಮತಃ ಪರಂ ಸಂಪ್ರವಕ್ಷ್ಯಾಮಿ ।
ಆತ್ಮಾನುಭೂತಶಂಸೀ ಪರಸಂಶ್ರಿತವರ್ಣನಾವಿಶೇಷಸ್ತು ॥
ದ್ವಿವಿಧಾಶ್ರಯೋ ಹಿ ಭಾಣೋ ವಿಜ್ಞೇಯಸ್ತ್ವೇಕಹಾರ್ಯಶ್ಚ ॥
ಧೂರ್ತವಿಟಸಂಪ್ರಯೋಜ್ಯೋ ನಾನಾವಸ್ಥಾಂತಾತ್ಮಕಶ್ಚೈವ ।
ಏಕಾಂಕೋ ಬಹುಚೇಷ್ಟಃ ಸತತಂ ಕಾರ್ಯೋ ಬುಧೈರ್ಭಾಣಃ ॥

(20ನೆಯ ಅಧ್ಯಾಯ 107-110)

ಭಾಣವು ಏಕಾಂಕ ರೂಪಕ. ಸೂತ್ರಧಾರನೂ ನಟಿಯೂ ಪ್ರಸ್ತಾವನೆಯಲ್ಲಿ ಕಾಣಿಸಿಕೊಳ್ಳುವುದನ್ನು ಬಿಟ್ಟರೆ, ರಂಗದ ಮೇಲೆ ಬರುವ ಪಾತ್ರ ಒಂದೇ ಒಂದು. ಧೂರ್ತನಾದ ವಿಟನೊಬ್ಬನು ತಾನೇ ಅನುಭವಿಸಿದ ಅಥವಾ ಪರರು ಅನುಭವಿಸಿದ ಘಟನೆಗಳನ್ನು ವರ್ಣಿಸುತ್ತಾನೆ. ಇತರ ಪಾತ್ರಗಳು ಅಲ್ಲಿರುವಂತೆ ಕಲ್ಪಿಸಿಕೊಂಡು ಅವರೊಡನೆ ಸಂಭಾಷಿಸುತ್ತಾನೆ. ''ಏನೆಂದೆ, ................ ಎಂದು ಹೇಳುವೆಯಾ'' ಎಂಬ ರೀತಿಯಲ್ಲಿ ಇನ್ನೊಬ್ಬನ ಮಾತುಗಳನ್ನು ತಾನೇ ಅನುವಾದಿಸಿ ಕಥೆಯನ್ನು ಮುಂದುವರಿಸುತ್ತಾನೆ. ಭಾಣದಲ್ಲಿ ಇತಿವೃತ್ತವು ಕವಿಕಲ್ಪಿತ. ಶೃಂಗಾರರಸಕ್ಕೆ ಪ್ರಾಧಾನ್ಯ. ವೀರರಸ ಅಂಗವಾಗಿ ಬರಬಹುದು. ಹಾಸ್ಯವು ಹಾಸುಹೊಕ್ಕಾಗಿ ಸೇರಿಕೊಂಡಿರುತ್ತದೆ. ಸಾಧಾರಣವಾಗಿ ಎಲ್ಲ ಭಾಣಗಳಲ್ಲಿ ವಿಟನು ವೇಶ್ಯಾವಾಟಿಕೆಯನ್ನು ಪ್ರವೇಶಿಸಿ ಅಲ್ಲಿನ ಆಗುಹೋಗುಗಳನ್ನು ವರ್ಣಿಸುತ್ತಾನೆ. ದಶರೂಪಕ, ಪ್ರತಾಪರುದ್ರಯಶೋಭೂಷಣ, ರಸಾರ್ಣವಸುಧಾಕರ, ಸಾಹಿತ್ಯದರ್ಪಣ ಇತ್ಯಾದಿಗಳಲ್ಲೂ ಭರತನ ಅಭಿಪ್ರಾಯಕ್ಕೆ ಅನುಗುಣವಾಗಿ ಭಾಣದ ಲಕ್ಷಣವನ್ನು ಹೇಳಿದ್ದಾರೆ. ಅತ್ಯಂತ ಪ್ರಾಚೀನ ಕಾಲದಿಂದಲೂ ಮಹಾಕವಿಗಳು ಭಾಣಗಳನ್ನು ರಚಿಸಿದ್ದಾರೆ. ದಕ್ಷಿಣ ಭಾರತದ ಕವಿಗಳಿಂದಲೇ ಹೆಚ್ಚಿನ ಸಂಖ್ಯೆಯ ಭಾಣಗಳು ರಚಿತವಾಗಿವೆ. ಅತ್ಯಂತ ಪ್ರಾಚೀನವಾದ ಪದ್ಮಪ್ರಾಭೃತಕ, ಧೂರ್ತವಿಟ ಸಂವಾದ, ಉಭಯಾಭಿಸಾರಿಕಾ, ಪಾದತಾಡಿತಕ ಎಂಬ ನಾಲ್ಕು ಭಾಣಗಳನ್ನು ಒಟ್ಟಿಗೆ ಚತುರ್ಭಾಣೀ ಎಂದು ಕರೆಯುತ್ತಾರೆ.

ಇವುಗಳ ಬಗೆಗೆ ಪ್ರಸಿದ್ಧವಾದ ಪ್ರಾಚೀನ ಶ್ಲೋಕವೊಂದು - ನಾಲ್ವರು ಕವಿಗಳು ಇವುಗಳನ್ನು ರಚಿಸಿದರು. ಭಾಣವನ್ನು ರಚಿಸುವ ಶಕ್ತಿ ಕಾಳಿದಾಸನಿಗೆಲ್ಲಿದೆ ?

ಎಂದು ಪ್ರಶ್ನಿಸುತ್ತದೆ.

ವರರುಚಿರೀಶ್ವರದತ್ತಃ ಶ್ಯಾಮಿಲಕಃ ಶೂದ್ರಕಶ್ಚ ಚತ್ವಾರಃ ।
ಏತೇ ಭಾಣಾನ್ ಬಭಣುಃ ಕಾ ಶಕ್ತಿಃ ಕಾಲಿದಾಸಸ್ಯ ? ॥

ಇದರಿಂದ ಭಾಣಗಳ ಪ್ರಾಮುಖ್ಯವು ವ್ಯಕ್ತವಾಗುತ್ತದೆ.

ಪ್ರಕೃತವಾದ ಕಾಮವಿಲಾಸಭಾಣವು ಪ್ರಾಚೀನ ಭಾಣಗಳ ಮಾದರಿಯಲ್ಲೇ ರಚಿತವಾಗಿದ್ದು ವೆಂಕಾಮಾತ್ಯನ ಕವಿತಾಸಾಮರ್ಥ್ಯವನ್ನೂ, ಕಲ್ಪನಾವೈಭವವನ್ನೂ ಸೂಚಿಸುತ್ತದೆ. ಇಲ್ಲಿ ವರ್ಣಿತವಾಗಿರುವುದು ವೆಂಕಾಮಾತ್ಯನ ಕಾಲದಲ್ಲಿ ಮೈಸೂರು ರಾಜ್ಯದ ರಾಜಧಾನಿಯಾಗಿದ್ದ ಶ್ರೀರಂಗಪಟ್ಟಣದ ವೇಶ್ಯಾವಾಟಿಕೆ. ಅಲ್ಲಿಗೆ ಬರುವ ನಾನಾ ವಿಧವಾದ ವಿಟರು, ಅವರನ್ನು ಆಕರ್ಷಿಸುವ ವೇಶ್ಯೆಯರು, ವಿಟರ ಮನಸ್ಸನ್ನು ಸೆಳೆಯಲು ವೇಶ್ಯಾಂಗನೆಯರು ಬಳಸುವ ತಂತ್ರಗಳು, ತಮ್ಮ ಪ್ರಿಯೆಯರನ್ನು ಸಾಧಿಸಲು ಪ್ರೇಮಿಗಳು ಮಾಡುವ ಸಾಹಸ - ಇವೆಲ್ಲಾ ಈ ರೂಪಕದಲ್ಲಿ ವರ್ಣಿತವಾಗಿವೆ. ಪ್ರಕೃತಿ ವರ್ಣನೆಯ ದೃಶ್ಯಗಳು ಮನೋಜ್ಞವಾಗಿವೆ. ಗದ್ಯ-ಪದ್ಯಗಳು ಹದವಾಗಿ ಮಿಳಿತವಾಗಿದ್ದು ಭಾಷೆಯ ಸೊಗಸು ಓದುಗರನ್ನು ಆಕರ್ಷಿಸುತ್ತದೆ. ವೆಂಕಪ್ಪಯ್ಯನ ಶೈಲಿ ಪ್ರೌಢ, ಆದರೂ ನಿರೂಪಣೆ ಮನಮುಟ್ಟುವಂತಿದೆ. ತಾನು ಸರಸ ಕವಿಯೆಂದು ಕೃತಿಕಾರನು ಹೇಳಿಕೊಂಡಿದ್ದರೂ ಭಾಸ-ಕಾಳಿದಾಸಾದಿಗಳ ಉನ್ನತಶ್ರೇಣಿಗೆ ಇವನನ್ನು ಸೇರಿಸುವಷ್ಟು ಉತ್ತಮವಾದ ಕಲ್ಪನೆಗಳಾಗಲಿ, ಧ್ವನಿಮತ್ತ್ವವಾಗಲಿ ಇಲ್ಲಿ ಕಾಣುವುದಿಲ್ಲ. ಇವನು ಪಾಂಡಿತ್ಯಪೂರ್ಣನಾದ ಮಧ್ಯಮದರ್ಜೆಯ ಕವಿಯೆಂದು ಹೇಳಬಹುದು.

ಭಾಣದಲ್ಲಿ ಶೃಂಗಾರವೇ ಪ್ರಧಾನರಸವಾಗಿದ್ದು ಅಲ್ಲಿ ಪ್ರಸ್ತಾವಿಸಲಾಗುವ ಪಾತ್ರಗಳು ವಿಟ, ವೇಶ್ಯೆ, ಕಾಮುಕ ಇತ್ಯಾದಿಗಳಾದ್ದರಿಂದ ಅನೇಕ ಸಂದರ್ಭಗಳಲ್ಲಿ ಇಲ್ಲಿನ ವರ್ಣನೆಗಳು ಅಶ್ಲೀಲದ ಅಂಚನ್ನು ಮುಟ್ಟುತ್ತವೆ. ಹಾಸ್ಯ, ವಿಡಂಬನೆ, ಗರ್ಹಣೆಗಳು ಇಲ್ಲಿ ಮುಖ್ಯ ಉದ್ದೇಶವಾದ ಕಾರಣ ಅನೇಕ ಪಾತ್ರಗಳು (ಅವು ರಂಗದ ಮೇಲೆ ಪ್ರವೇಶಿಸದಿದ್ದರೂ) ಶಿಥಿಲೀಕೃತವಾಗಿ ತೋರಿಸಲ್ಪಡುತ್ತವೆ. ಉದಾಹರಣೆಗೆ ಗೂರ್ಜರ ಪುರಾಣಿಕನ ಪಾತ್ರ ಚಿತ್ರಣವನ್ನು ಗಮನಿಸಬಹುದು. ಎಲ್ಲ ಭಾಣಗಳಲ್ಲಿ ಇದು ಸಾಮಾನ್ಯವಾದ್ದರಿಂದ ಸಹ್ಯವೆಂದು ಭಾವಿಸಬೇಕು.

ಸಂಸ್ಕೃತದ ನಾಟಕಾದಿ ರೂಪಕಗಳಲ್ಲಿ ಅನೇಕ ಪಾತ್ರಗಳು ಸಂಸ್ಕೃತದ ಬದಲು

**ಕಾಮವಿಲಾಸಭಾಣ :** ಹಿಂದೆ ತಿಳಿಸಿದ ಹತ್ತು ಪ್ರಕಾರದ ಸಂಸ್ಕೃತ ರೂಪಕಗಳಲ್ಲಿ ಭಾಣವೆಂಬುದು ಒಂದು. ಇದರ ಲಕ್ಷಣವನ್ನು ನಾಟ್ಯಶಾಸ್ತ್ರದಲ್ಲಿ ಭರತನು ಹೀಗೆ ಹೇಳಿದ್ದಾನೆ -

ಭಾಣಸ್ಯಾಪಿ ಹಿ ಲಕ್ಷಣಮತಃ ಪರಂ ಸಂಪ್ರವಕ್ಷ್ಯಾಮಿ ।
ಆತ್ಮಾನುಭೂತಶಂಸೀ ಪರಸಂಶ್ರಿತವರ್ಣನಾವಿಶೇಷಸ್ತು ॥
ದ್ವಿವಿಧಾಶ್ರಯೋ ಹಿ ಭಾಣೋ ವಿಜ್ಞೇಯಸ್ತ್ವೇಕಹಾರ್ಯಶ್ಚ ॥
ಧೂರ್ತವಿಟಸಂಪ್ರಯೋಜ್ಯೋ ನಾನಾವಸ್ಥಾಂತಾತ್ಮಕಶ್ಚೈವ ।
ಏಕಾಂಕೋ ಬಹುಚೇಷ್ಟಃ ಸತತಂ ಕಾರ್ಯೋ ಬುಧೈರ್ಭಾಣಃ ॥

(20ನೆಯ ಅಧ್ಯಾಯ 107- 110)

ಭಾಣವು ಏಕಾಂಕ ರೂಪಕ. ಸೂತ್ರಧಾರನೂ ನಟಿಯೂ ಪ್ರಸ್ತಾವನೆಯಲ್ಲಿ ಕಾಣಿಸಿಕೊಳ್ಳುವುದನ್ನು ಬಿಟ್ಟರೆ, ರಂಗದ ಮೇಲೆ ಬರುವ ಪಾತ್ರ ಒಂದೇ ಒಂದು. ಧೂರ್ತನಾದ ವಿಟನೊಬ್ಬನು ತಾನೇ ಅನುಭವಿಸಿದ ಅಥವಾ ಪರರು ಅನುಭವಿಸಿದ ಘಟನೆಗಳನ್ನು ವರ್ಣಿಸುತ್ತಾನೆ. ಇತರ ಪಾತ್ರಗಳು ಅಲ್ಲಿರುವಂತೆ ಕಲ್ಪಿಸಿಕೊಂಡು ಅವರೊಡನೆ ಸಂಭಾಷಿಸುತ್ತಾನೆ. ''ಏನೆಂದೆ, ................ ಎಂದು ಹೇಳುವೆಯಾ'' ಎಂಬ ರೀತಿಯಲ್ಲಿ ಇನ್ನೊಬ್ಬನ ಮಾತುಗಳನ್ನು ತಾನೇ ಅನುವಾದಿಸಿ ಕಥೆಯನ್ನು ಮುಂದುವರಿಸುತ್ತಾನೆ. ಭಾಣದಲ್ಲಿ ಇತಿವೃತ್ತವು ಕವಿಕಲ್ಪಿತ. ಶೃಂಗಾರರಸಕ್ಕೆ ಪ್ರಾಧಾನ್ಯ. ವೀರರಸ ಅಂಗವಾಗಿ ಬರಬಹುದು. ಹಾಸ್ಯವು ಹಾಸುಹೊಕ್ಕಾಗಿ ಸೇರಿಕೊಂಡಿರುತ್ತದೆ. ಸಾಧಾರಣವಾಗಿ ಎಲ್ಲ ಭಾಣಗಳಲ್ಲಿ ವಿಟನು ವೇಶ್ಯಾವಾಟಿಕೆಯನ್ನು ಪ್ರವೇಶಿಸಿ ಅಲ್ಲಿನ ಆಗುಹೋಗುಗಳನ್ನು ವರ್ಣಿಸುತ್ತಾನೆ. ದಶರೂಪಕ, ಪ್ರತಾಪರುದ್ರಯಶೋಭೂಷಣ, ರಸಾರ್ಣವಸುಧಾಕರ, ಸಾಹಿತ್ಯದರ್ಪಣ ಇತ್ಯಾದಿಗಳಲ್ಲೂ ಭರತನ ಅಭಿಪ್ರಾಯಕ್ಕೆ ಅನುಗುಣವಾಗಿ ಭಾಣದ ಲಕ್ಷಣವನ್ನು ಹೇಳಿದ್ದಾರೆ. ಅತ್ಯಂತ ಪ್ರಾಚೀನ ಕಾಲದಿಂದಲೂ ಮಹಾಕವಿಗಳು ಭಾಣಗಳನ್ನು ರಚಿಸಿದ್ದಾರೆ. ದಕ್ಷಿಣ ಭಾರತದ ಕವಿಗಳಿಂದಲೇ ಹೆಚ್ಚಿನ ಸಂಖ್ಯೆಯ ಭಾಣಗಳು ರಚಿತವಾಗಿವೆ. ಅತ್ಯಂತ ಪ್ರಾಚೀನವಾದ ಪದ್ಮಪ್ರಾಭೃತಕ, ಧೂರ್ತವಿಟ ಸಂವಾದ, ಉಭಯಾಭಿಸಾರಿಕಾ, ಪಾದತಾಡಿತಕ ಎಂಬ ನಾಲ್ಕು ಭಾಣಗಳನ್ನು ಒಟ್ಟಿಗೆ ಚತುರ್ಭಾಣೀ ಎಂದು ಕರೆಯುತ್ತಾರೆ.

ಇವುಗಳ ಬಗೆಗೆ ಪ್ರಸಿದ್ಧವಾದ ಪ್ರಾಚೀನ ಶ್ಲೋಕವೊಂದು - ನಾಲ್ವರು ಕವಿಗಳು ಇವುಗಳನ್ನು ರಚಿಸಿದರು. ಭಾಣವನ್ನು ರಚಿಸುವ ಶಕ್ತಿ ಕಾಳಿದಾಸನಿಗೆಲ್ಲಿದೆ ?

ಎಂದು ಪ್ರಶ್ನಿಸುತ್ತದೆ.

ವರರುಚಿರೀಶ್ವರದತ್ತಃ ಶ್ಯಾಮಿಲಕಃ ಶೂದ್ರಕಶ್ಚ ಚತ್ವಾರಃ ।
ಏತೇ ಭಾಣಾನ್ ಬಭಣುಃ ಕಾ ಶಕ್ತಿಃ ಕಾಲಿದಾಸಸ್ಯ ? ॥

ಇದರಿಂದ ಭಾಣಗಳ ಪ್ರಾಮುಖ್ಯವು ವ್ಯಕ್ತವಾಗುತ್ತದೆ.

ಪ್ರಕೃತವಾದ ಕಾಮವಿಲಾಸಭಾಣವು ಪ್ರಾಚೀನ ಭಾಣಗಳ ಮಾದರಿಯಲ್ಲೇ ರಚಿತವಾಗಿದ್ದು ವೆಂಕಾಮಾತ್ಯನ ಕವಿತಾಸಾಮರ್ಥ್ಯವನ್ನೂ, ಕಲ್ಪನಾವೈಭವವನ್ನೂ ಸೂಚಿಸುತ್ತದೆ. ಇಲ್ಲಿ ವರ್ಣಿತವಾಗಿರುವುದು ವೆಂಕಾಮಾತ್ಯನ ಕಾಲದಲ್ಲಿ ಮೈಸೂರು ರಾಜ್ಯದ ರಾಜಧಾನಿಯಾಗಿದ್ದ ಶ್ರೀರಂಗಪಟ್ಟಣದ ವೇಶ್ಯಾವಾಟಿಕೆ. ಅಲ್ಲಿಗೆ ಬರುವ ನಾನಾ ವಿಧವಾದ ವಿಟರು, ಅವರನ್ನು ಆಕರ್ಷಿಸುವ ವೇಶ್ಯೆಯರು, ವಿಟರ ಮನಸ್ಸನ್ನು ಸೆಳೆಯಲು ವೇಶ್ಯಾಂಗನೆಯರು ಬಳಸುವ ತಂತ್ರಗಳು, ತಮ್ಮ ಪ್ರಿಯೆಯರನ್ನು ಸಾಧಿಸಲು ಪ್ರೇಮಿಗಳು ಮಾಡುವ ಸಾಹಸ - ಇವೆಲ್ಲಾ ಈ ರೂಪಕದಲ್ಲಿ ವರ್ಣಿತವಾಗಿವೆ. ಪ್ರಕೃತಿ ವರ್ಣನೆಯ ದೃಶ್ಯಗಳು ಮನೋಜ್ಞವಾಗಿವೆ. ಗದ್ಯ-ಪದ್ಯಗಳು ಹದವಾಗಿ ಮಿಳಿತವಾಗಿದ್ದು ಭಾಷೆಯ ಸೊಗಸು ಓದುಗರನ್ನು ಆಕರ್ಷಿಸುತ್ತದೆ. ವೆಂಕಪ್ಪಯ್ಯನ ಶೈಲಿ ಪ್ರೌಢ, ಆದರೂ ನಿರೂಪಣೆ ಮನಮುಟ್ಟುವಂತಿದೆ. ತಾನು ಸರಸ ಕವಿಯೆಂದು ಕೃತಿಕಾರನು ಹೇಳಿಕೊಂಡಿದ್ದರೂ ಭಾಸ-ಕಾಳಿದಾಸಾದಿಗಳ ಉನ್ನತಶ್ರೇಣಿಗೆ ಇವನನ್ನು ಸೇರಿಸುವಷ್ಟು ಉತ್ತಮವಾದ ಕಲ್ಪನೆಗಳಾಗಲಿ, ಧ್ವನಿಮತ್ತ್ವವಾಗಲಿ ಇಲ್ಲಿ ಕಾಣುವುದಿಲ್ಲ. ಇವನು ಪಾಂಡಿತ್ಯಪೂರ್ಣನಾದ ಮಧ್ಯಮದರ್ಜೆಯ ಕವಿಯೆಂದು ಹೇಳಬಹುದು.

ಭಾಣದಲ್ಲಿ ಶೃಂಗಾರವೇ ಪ್ರಧಾನರಸವಾಗಿದ್ದು ಅಲ್ಲಿ ಪ್ರಸ್ತಾವಿಸಲಾಗುವ ಪಾತ್ರಗಳು ವಿಟ, ವೇಶ್ಯೆ, ಕಾಮುಕ ಇತ್ಯಾದಿಗಳಾದ್ದರಿಂದ ಅನೇಕ ಸಂದರ್ಭಗಳಲ್ಲಿ ಇಲ್ಲಿನ ವರ್ಣನೆಗಳು ಅಶ್ಲೀಲದ ಅಂಚನ್ನು ಮುಟ್ಟುತ್ತವೆ. ಹಾಸ್ಯ, ವಿಡಂಬನೆ, ಗರ್ಹಣೆಗಳು ಇಲ್ಲಿ ಮುಖ್ಯ ಉದ್ದೇಶವಾದ ಕಾರಣ ಅನೇಕ ಪಾತ್ರಗಳು (ಅವು ರಂಗದ ಮೇಲೆ ಪ್ರವೇಶಿಸದಿದ್ದರೂ) ಶಿಥಿಲೀಕೃತವಾಗಿ ತೋರಿಸಲ್ಪಡುತ್ತವೆ. ಉದಾಹರಣೆಗೆ ಗೂರ್ಜರ ಪುರಾಣಿಕನ ಪಾತ್ರ ಚಿತ್ರಣವನ್ನು ಗಮನಿಸಬಹುದು. ಎಲ್ಲ ಭಾಣಗಳಲ್ಲಿ ಇದು ಸಾಮಾನ್ಯವಾದ್ದರಿಂದ ಸಹ್ಯವೆಂದು ಭಾವಿಸಬೇಕು.

ಸಂಸ್ಕೃತದ ನಾಟಕಾದಿ ರೂಪಕಗಳಲ್ಲಿ ಅನೇಕ ಪಾತ್ರಗಳು ಸಂಸ್ಕೃತದ ಬದಲು

ಶೌರಸೇನೀ, ಅರ್ಧಮಾಗಧೀ ಮುಂತಾದ ಪ್ರಾಕೃತಗಳನ್ನೋ ಅಪಭ್ರಂಶವನ್ನೋ ಆಡಬೇಕೆಂದು ಶಾಸ್ತ್ರನಿಯಮವಿದೆ. ಆದರೆ ಭಾಣದಲ್ಲಿ ಸಂಪೂರ್ಣವಾಗಿ ಸಂಸ್ಕೃತವನ್ನೇ ಬಳಸುವುದರಿಂದ ಪೂರ್ಣ ಸಂಸ್ಕೃತರೂಪಕವೆಂದರೆ ಭಾಣ ಎನ್ನಬೇಕು. ಆದ್ದರಿಂದಲೇ 'ಭಾರತೀವೃತ್ತಿ' ಎಂಬ ಪದವನ್ನು ಭಾಣದ ಲಕ್ಷಣದಲ್ಲಿ ಲಾಕ್ಷಣಿಕರು ಬಳಸುತ್ತಾರೆ. ''ಭಾರತೀ ಸಂಸ್ಕೃತಪ್ರಾಯೋವಾಗ್ವ್ಯಾಪಾರಃ'' ಎಂದು ಹೇಳಿರುವುದರಿಂದ ಇಲ್ಲಿ ಆದಿಯಿಂದ ಅಂತ್ಯದವರೆಗೆ ಕೇವಲ ಸಂಸ್ಕೃತವೇ ಇರುತ್ತದೆ.

ವೆಂಕಪ್ಪಯ್ಯನು ಅಮಾತ್ಯಪದವಿಯಲ್ಲಿದ್ದೂ ಸಾಹಿತ್ಯರಚನೆಗಾಗಿ ತನ್ನ ಕಾಲವನ್ನು ವಿನಿಯೋಗಿಸಿ ಲೋಕಕ್ಕೆ ನೀಡಿರುವ ಈ ಕೃತಿ ಸಂಸ್ಕೃತಜ್ಞರಿಗೆ ಸ್ವಾಗತಾರ್ಹವೆಂದೂ, ಹದಿನೆಂಟನೆಯ ಶತಮಾನದ ಉತ್ತರಾರ್ಧದಲ್ಲಿನ ಜೀವನದ ಹಲವು ಮುಖಗಳಿಗೆ ಕನ್ನಡಿಯಿಟ್ಟಂತಿರುವುದೆಂದೂ ಹೇಳಿದರೆ ತಪ್ಪಾಗಲಾರದು.

ಎಚ್.ವಿ. ನಾಗರಾಜರಾವ್
ಸಂಪಾದಕ

# CONSPECTUS OF MANUSCRIPTS UTILISED

| Symbol | Number | Material | Script | Size in cms | Folio | Lines per page | Letters per line | Extent | Place of preservation |
|---|---|---|---|---|---|---|---|---|---|
| क | B 192/1 | Paper | Devanagari | 16X20 | 1—29 | 18 | 22 | complete | O.R.I Mysore |
| ख | B 341 | Paper | Kannada | 16X19.5 | 1—45 | 11 | 20 | complete | - " - |
| ग | P 2586/5 | Palm leaf | Nagari | 6X36 | 114—125 | 12 | 74 | complete | - " - |
| घ | — | Palm leaf | Telugu | | | | | complete | Asthana Sarasvati Bhandara, Mysore |

श्री वेङ्कामात्यविरचितः

# कामविलासभाणः

जयन्ति जगदानन्दमन्दारोदयहेतवः ।
चिदानन्दगुरोरङ्घ्रिनखेन्दुकिरणाङ्कुराः ॥ १ ॥

केलीं कामपि कौतुकाद्विरचयन्ना[1]भीरवामालका-
वक्षोजद्वय[2]हारमध्यघटितं क्षिप्त्वा जवा[2]त्कन्दुकम् ।
तद्याच्ञाकपटेन तामनुनयन्नाश्लेषविश्राणनात्
कृष्णस्तत्कृतकन्तुकेलिमुदितः पुष्णातु वः कौतुकम् ॥ २ ॥

---

१ - भीरु - क; २ ...... २ - नास्ति क ख

---

**टिप्पणी :** भाणाख्यरूपकस्येयं नान्दी पञ्चभिः पद्यैः कविना कृता । प्रथमपद्ये स्वगुरोः चिदानन्दस्य स्तुतिः प्रस्तुता । आनन्द एव मन्दारः, नखा एवेन्दवः, किरणा एव अङ्कुराः इति अभेदारोपात् सावयवं रूपकम् । जयन्ति सर्वोत्कर्षेण वर्तन्ते ।

केलीमिति । द्वितीयपद्ये श्रीकृष्णस्य स्तुतिः प्रस्तूयते । आभीरवामाः गोपसुन्दर्यः । अलकाः चूर्णकुन्तलाः । आश्लेष : आलिङ्गनम् । विश्राणनं वितरणम् । कन्तुः कन्दर्पः, तस्य केलिः क्रीडा । तया मुदितः हृष्टः । कौतुकं-पुष्णातु आनन्दं वर्धयतु इति आशीः । आशिषि लिङ्लोटौ इति लोट् । शार्दूलविक्रीडितं छन्दः । सूर्याश्वैर्मसजास्ततः सगुरवश्शार्दूलविक्रीडितम् इति लक्षणात् ।

अपि च -

गण्डक्षोणिगलन्मदाम्बुलहरीवल्गन्मिलिन्दाङ्गना-
गीता[1]कर्णनसम्भ्रमोदितघनोत्कण्ठप्रियालिङ्गितः ।
प्रत्यूहानिव [2]वारयन् प्रणमतां शुण्डां विधून्वन्मुदा
कल्याणं वितनोतु वः प्रतिकलं [3]कण्ठोपरिष्टाद् गजः ।। ३ ।।

अपि च -

[4]वामाङ्गस्थवधूविलासविवशं कृत्वा महेशं चिरं
सामन्तं शशिनं च तत्परिसरे क्षिप्त्वा तदुद्दीपकम् ।
दोर्लीलालवमुद्रितत्रिजगतीधैर्यप्रबोधोद्धुतिः
विष्वग्वन्दितशासनो विजयते विश्वैकवीरः [5]स्मरः[5] ।। ४ ।।

---

१. कन्मनसं - क; २. वारं - क वारय - ख; ३. कारो - क;
४. वाताङ्ग - क; ५. अयं भागः क-खयोः लुप्तः

---

**टिप्पणी :**

गण्डेति ।अत्र गणेशस्तुतिः - गण्डः कपोलः । मिलिन्दः भ्रमरः । प्रत्यूहः विघ्नः । कला नाम कालविशेषः,काष्ठास्त्रिंशत्तु ताः कलाः इत्यमरः । कलायां कलायाम् इति प्रतिकलम् । सदा इत्यर्थः । कण्ठोपरिष्टाद् गजः विनायकः । शार्दूलविक्रीडितम् ।

वामाङ्गेति । दोर्लीला बाहुबलम् । भुजबाहू प्रवेष्टो दोः इत्यमर : । विष्वक् समन्ततः । शिवस्य वामभागे पार्वती वर्तते । तस्या विलासेन विवशं कृत्वेति भावः । अत्र विषयानुगुण्येन मन्मथस्य स्तुतिः । शार्दूलविक्रीडितं छन्दः ।

(नान्द्यन्ते)

सूत्रधारः - (सामाजिकानवलोक्य)

पर्यायव्यपवृत्तमौक्तिकसरं प्रस्यन्दिघर्माम्बुकं
दृश्यादृश्यनखक्षतं दृढपरीरम्भोत्तृटत्कञ्चुकम्[1] ।
तन्वङ्ग्यास्तपनीयकुम्भसुषमा[2]प्रस्पर्धिभङ्ग्या रुचा-
मुद्वृत्तं स्तनयुग्ममस्तु भवता[3]मुच्चा[3]वचश्रेयसे ।। ५ ।।

अपि च

स्फायन्मांसल[4]भावमञ्जुलतया संमोहिवक्षोरुह-
स्निग्धापाङ्ग-सखीकृतस्मितरुचा संमुग्धवक्त्राम्बुजम् ।
प्रत्यङ्गं प्रविसारिचञ्चलतरच्छायाभिरालक्षितं
कुर्याद्[5]यौवतयौवनं च कुशलामोदप्रसौख्यानि वः ।। ६ ।।

---

१. कञ्चुका - क ; २. प्रस्पर्दि - क ; ३. अयं भागः क-खयोर्लुप्तः ;
४. भार - ख ; ५. यव्वतयव्वनं - घ

---

**टिप्पणी**

पर्यायेति । घर्माम्बु स्वेदः । परीरम्भः आलिङ्गनम् । तपनीयं सुवर्णम् । सुषमा परमा शोभा । उच्चावचश्रेयसे अनेकविधमङ्गलाय । उच्चावचो नैकभेदः इत्यमरः । स्फायन्निति । वक्षोरुहः स्तनः । संमुग्धं सुन्दरम् । प्रविसारि व्याप्तिशीलम् । यौवतं युवतिसमूहः । तस्य यौवनं तारुण्यम् । कुशलं क्षेमम्, आमोदं सन्तोषं, प्रसौख्यं प्रकृष्टं सुखं च इत्येतानि । शार्दूलविक्रीडितम् ।

हारावलीनटनरङ्गकुच[1]स्थलीनां
स्मेराननप्रवलित[2]श्रमबिन्दुकानाम् ।
पारावतीसदृशहुङ्कृतिचारु तद्वो
वीरायितं मृगदृशां वितरत्वभीष्टम् ।। ७ ।।

मारिष, इतस्तावत् ।

(प्रविश्य)

[3]पारिपार्श्विकः - [4]भाव, अयमस्मि ।

सूत्रधारः - अद्य खलु निरवद्यपाकशशाङ्कलेखालङ्कृतकपर्द-भागस्य, सकल देवताधुरन्धरस्य वसन्तोत्सवविलोकनकुतूहला-गतेन रसिकसदसा समादिष्टोऽस्मि ।

---

१. स्थिरीनां - क ; २. श्रमज - क ; ३. पारिपार्श्वकः इति मातृकासु ; ४ - ४ - अयं भागः कखयोः अशुद्धः । गपुस्तकपाठः समीचीन इति स एवादृतः । घपुस्तकेऽयंभागोनास्ति ।

---

**टिप्पणी -**

हारावलीति । श्रमबिन्दुः स्वेदकणः । पारावती = पारावतस्त्री, कपोती । मृगदृशां स्त्रीणाम् । वीरायितं पुरुषायितम् । वसन्ततिलकवृत्तम् । परितः पार्श्वे विद्यमानः पारिपार्श्विकः । निरवद्यः निर्दोषः । पाकशशाङ्कः बालचन्द्रः । पोतः पाकोऽर्भको डिम्भ इत्यमरः । कपर्दः जटाजूटः । धुरन्धुरः मुख्यः । रंसिकाः सामाजिकाः । सदः सभा ।

पारिपार्श्विकः - कथमिति ?

सूत्रधारः - अये, रङ्गपुरीवास्तव्य भरतकुलतिलक, श्रुतोऽसि प्रयोगविद्याकुशल इति । तदिदानीं रसवदेव रूपकमभिनीय सार्थकयास्माकमभिलाषमिति ।

पारिपार्श्विकः - मृग्याः [1]खलु सरसकवयः ।

भावव्यङ्ग्यपरिष्कृतौ कवयतां मार्गानभिज्ञा वृथा
शब्दाडम्बरसस्पृहाः कतिपये सन्त्येव किन्तैरिह ।
पद्ये क्वापि [2]रसानुगुण्यघटनालाभेन [3]बुद्धे रसे
लज्जावाननुरूपरूप[4]ककविर्लभ्येत सभ्येषु कः ॥ ८ ॥

सूत्रधारः - (सानुस्मरणम् ) अस्ति हि,

सम्मर्देन रसस्य सौख्यलहरीमुद्वेलमातन्वता
ख्यातः कामविलास [5]इत्यभिनवो भाणो धुरीणो गुणैः ।
माद्यन्ते प्रधियोऽपि यत्र च रसास्वादाय [6]साधीयसे
मञ्जर्यामिव मञ्जुतायुजि मधुस्यन्दान्मिलिन्दा इव ॥ ९ ॥

---

१. बुलु - क ; २. पदानु - घ ३. लुब्धे - क, घ ; ४. मापक - ख
५. यत्यभिनवो - ग ; ६. साधीयते - क, ख

---

**टिप्पणी** - रङ्गपुरी = श्रीरङ्गपत्तनम् । वास्तव्यः वासकर्ता । वस्तेस्तव्यत् कर्तरि णिच्च इति कर्तरि तव्यत् । सार्थकय सार्थकं कुरु । मृग्याः दुर्लभाः । सभ्याः सभायां साधवः ।

पारिपार्श्विकः - कस्य कवेर्वदनारविन्दविहरमाणभारती-विलासोऽयं सूक्तिनिष्यन्दः ?

सूत्रधारः - जगद्विदितमपि तन्न जानाति भवान् ?

य: श्रीरामपदारविन्दविहरद्भृङ्गायमाणामल-
[1]स्वान्तश्रीपवनात्मजप्रसदनस्वाधीननानाकलः ।
येनाकारि कवीन्द्रनन्दित [2]रसं सीताविवाहाभिधं
काव्यं श्रीहनुमज्जयेन च समं कर्णाटरामायणम् ॥ १० ॥

---

१. सन्त - ख ; २. सरं - क

---

टिप्पणी -

शब्दाडम्बरप्रदर्शनेन प्रयोजनं नास्ति, रसात्मकमेव काव्यं रचनीयम् इति भावः । शार्दूलविक्रीडितं छन्दः ।

सम्मर्देनेति । उद्वेलम् अतिशयेन । धुरीणः = धुरन्धरः । धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः इत्यमरः । प्रकृष्टा धीः बुद्धिः येषां ते प्रधियः । साधीयसे श्रेष्ठाय । बाढशब्दादीयसुनि "अन्तिकबाढयोर्नेदसाधौ" इति सूत्रेण साधादेशः । मञ्जुतायुजि मञ्जुलतायुक्ते । मिलिन्दाः भ्रमराः । शार्दूलविक्रीडितम् । उपमालङ्कारः । भारतीविलासः सरस्वतीविहारः । सूक्तिनिष्यन्दः सुभाषितनिर्झरः ।

य इति । भृङ्ग इव आचरति इति भृङ्गायमाणम् । कर्तुः क्यङ् सलोपश्च । स्वान्तं हृन्मानसं मनः इत्यमरः । पवनात्मजः मारुतिः । प्रसदनं प्रसादसम्पादनम् । अकारि कृतम् । कविः श्रीरामस्य भक्तस्य भक्तः ।

शब्दार्थोभयमर्मसौरभकलां जानन् रसस्य ध्वनेः
यः पुम्भावसरस्वतीति कवयज्जालेषु जेगीय्यते ।
आशास्यार्पणतः समागतवतामासेतुशीताचलं
सञ्चिन्वन् विमलं यशो विजयते धर्मो वपुष्मानिव ॥ ११ ॥

अपि च

विश्वानन्दिनि मौनभार्गवकुले दुग्धाम्बुधौ [१]प्रोज्ज्वले
हम्पार्याभिधमन्त्रिणः समुदितो [२]वाबाम्बिकागर्भतः ।
आजन्मप्रथमानमानविलस[३]त्सौशील्यसाम्राज्यभू-
र्वेङ्कप्पप्रभुरुन्नतो गुणगणैस्सोऽयं न केन [४]श्रुतः ॥ १२ ॥

---

१. प्राज्वले - क ; २. वामाम्बिका - ख ; ३. कौशल्य - ग; ४. श्रितः - ख. श्रुतः - घ

---

**टिप्पणी -**

शब्दार्थेति । जेगीय्यते =भृशमतिशयेन वा पुनः पुनः गीयते । यङन्तात्कर्मणि लट् । आशास्यम् = अपेक्षितम् । तस्यार्पणतः दानेन । वपुष्मानिव शरीरधारीव । आसेतुशीताचलं रामसेतोरारभ्य हिमालयपर्वतपर्यन्तम् इत्यर्थः । वपुष्मान् धर्म इवेति स्वरूपोत्प्रेक्षा । शार्दूलविक्रीडितम् । पुम्भावसरस्वतीति कवेरस्य प्रशस्तिः ।

विश्वानन्दिनीति । हम्पार्याभिधमन्त्रिणः हम्पार्यनाम्नः सचिवात् । समुदितः संजातः । सौशील्यं सुशीलता । सौशील्यस्य यत्साम्राज्यं तस्य भूः भूमिः । भूर्भूमिरचलानन्ता इत्यमरः । केन न श्रुतः ? सर्वैरपि श्रुत एवेति भावः । शार्दूलविक्रीडितम् ।

पारिपार्श्विकः - कथमस्य सन्ततपरिशील्यमानब्रह्मविद्यारहस्यस्य प्रतिकलप्रवर्धमान[1]लक्ष्मीविलाससहस्रमुदितस्य च रूपकेऽपि सरसपदसन्दर्भा सरस्वती ?

सूत्रधारः - किं न श्रुतं सकृदप्यस्य सभां प्रविशन्तः सद्यस्सरसकवयो भवन्ति । किं पुनर्भारतीपुरुषावतारस्य तस्य कवेः ? किञ्च, सर्वं [2]सुसंघटितमधुना । तथा हि ।

कालः कम्रवनप्रियप्रियतमाकण्ठस्वरश्लाघितः
काव्यज्ञः कविरप्यसौ कवयतां [3]मूर्धन्यतायाः पदम् ।
अभ्यासेन वयं प्रयोगनिपुणाः, सभ्या रसज्ञा इमे
पुण्यैर्नः फलितं पुराविरचितैस्सर्वप्रकारैरतः ।। १३ ।।

तदुन्मुच्यतां पात्रमविलम्बेन ।

पारिपार्श्विकः - यथाज्ञापयति भावः । (इति निष्क्रान्तः )

---

१. लक्ष्मीसहस्र - क, ख ; २. सुघटित - ख, ग ; ३. मूर्धन्यायाः -ग

---

**टिप्पणी** - कथमिति । ब्रह्मविद्या वेदान्तशास्त्रम् । सवस्वती वाणी । गीर्वाग्वाणी सरस्वतीत्यमरः । किमिति । सकृदपि एकदापि । काल इति । कम्रं रमणीयम् । वनप्रियः परभृतः कोकिलः पिक इत्यपि इत्यमरः । तस्य या प्रियतमा कोकिला, तस्याः कण्ठस्वरेण श्लाघितः कालः वसन्त इत्यर्थः । मूर्धन्यः श्रेष्ठः । रसज्ञाः रसिकाः । इगुपधज्ञाप्रीकिरः कः इति कप्रत्ययः । शार्दूलविक्रीडितम् । उन्मुच्यतां पात्रम् इत्यस्य पात्रोचितो वेषो धार्यताम् इत्यर्थः । अविलम्बेन शीघ्रम् । शार्दूलविक्रीडितम् ।

सूत्रधारः - (सर्वतो विलोक्य)

अहो ! प्रारम्भेऽपि रमणीयता वसन्तसमयस्य।

आरुण्यं क्रमशो बिभर्ति विकसच्चाम्पेयवल्ली क्वचित्
[1]पीता च क्वचिदेव भाति शनकैर्धूलिः कदम्बोत्थिता।
मन्दं मन्दमुदेति सौरभकला मल्लीलतास्वेकतो
मञ्जर्योऽपि रसालशाखिषु [2]शनैर्मञ्जूभवन्त्यन्यतः ॥ १४ ॥

अपि च।

[3]मधुरजनि कृतार्थो मन्मथाय स्वभर्त्रे
प्रसवमयकदम्बान् प्राप्य दत्त्वेति मत्वा।
सपदि मरुदमुष्यैवाशुगेष्वाशुगत्वं
स्वकमपि घटयित्वा सञ्चरत्येव [4]मन्दम् ॥ १५ ॥

---

१. पीत्वा - ख ; २. शनैर्मजू - क ; ३. मधुरजन - क ; ४. मदम् - क

---

**टिप्पणी -**

आरुण्यमिति। आरुण्यं रक्तवर्णत्वम्। चाम्पेयः चम्पकः। कदम्बोत्थिता धूलिः = कदम्बपुष्पोत्थितः परागः। सौरभं परिमलः। रसालशाखिषु चूतवृक्षेषु। वृक्षो महीरुहः शाखीत्यमरः। शार्दूलविक्रीडितम्।

मधुरिति। मधुः वसन्तः। अजनि जातः। आशुगाः बाणाः। आशुगत्वं क्षिप्रगामित्वम्। यद्यपि वायोः आशुग इति नाम, सम्प्रति वायुः आशुगत्वं मन्मथबाणेषु निधाय स्वयं मन्द्रं



वातीति भावः। मालिनीवृत्तम्। ननमयययुतेयं मालिनी भोगिलोकैः इति लक्षणात्।

अपि च

आस्थाय गन्धधरगन्धवहं [1]रथेन्द्रं
पौष्पे [2]निजे धनुषि पञ्चशरीं [3]प्रसज्य ।
प्रस्थानकौतुकितधीरिति [4]वार्तयैव
मथ्नात्ययं [5]विरहिणां मदनो मनांसि ॥१६ ॥

(नेपथ्ये)

[6]अंसश्लथां कबरिकामुपरि [7]ग्रथित्वा
नीवीं निबध्य निबिडं रशनागुणेन ।
[8]पापेन कुक्कुटरुतेन भियैव पत्यु-
र्जातं [9]प्रभातमिति हा चलिता नताङ्गी ॥ १७ ॥

---

१. धरेन्द्रं - क ; २. निभे - क ; ३. प्रयुज्य - क, ख ; ४. वार्त एव - क, ख
५. विहरणं - क, विरहिणीं -ख ; ६. अथ सश्लथां - क, ख, घ ; ७. इदं पदं कखयोर्नास्ति । ८. पादेन - ग ; ९. प्रभातमपि - क, ख, घ

---

**टिप्पणी -**

आस्थायेति । गन्धं धरतीति गन्धधरः । गन्धधरश्चासौ गन्धवहश्च, तम् । गन्धवहो वायुः स एव मन्मथस्य रथ इति भावः । पञ्चानां शराणां समाहारः पञ्चशरी । अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः । द्विगोः इति ङीप् । मदनो मन्मथः ।

अंसेति । कबरिका केशपाशः । स्त्रीपटीवस्त्राबन्धेपि नीवी इत्यमरः । रशना मेखला । पद्यद्वयमपि वसन्ततिलकवृत्ते निबद्धम् । उक्ता वसन्ततिलका तभजा जगौ गः इति लक्षणात् ।

(आकर्ण्य, नेपथ्यमवलोक्य)

[1]किं प्रविष्ट एव [a]रङ्गशालां चम्पकलता[a]वियुक्तस्य पल्लवतिलकस्य भूमिकामादाय[1] तदनुरूपवेषभाषणप्रयोगधुरीणो मम भावुक-सहोदरः कलकण्ठः ? तथा हि।

बिभ्रच्चित्रकमुज्ज्वलं मृगमदेनारक्तदृङ्‌निद्रया
मुक्तः प्राञ्चलचित्रिताम्बरधरः कक्षस्थकौक्षेयकः ।
[2]शोणोष्णीषनिबद्धकेतकदली[3]संवर्णितोत्तंसकः
कोऽयं मांसलदोस्तटः प्रलपतीवाग्रे विटग्रामणीः ॥ १८ ॥

तदहमनन्तरकरणीयाय सज्जीभवामि। (इति निष्क्रान्तः)

## प्रस्तावना

---

१-१- कखयोरयं भागो लुप्तप्रायः ; २. शोणी - क, ख ; (a ...a) - घपुस्तकएवायं भागः दृश्यते ; ३. संसर्गितोत्तंसकः - ख, संवर्दितोत्तंसकः - घ;

---

**टिप्पणी -**

पल्लवतिलको विटश्रेष्ठः । भूमिका वेषभूषादिकम् । मृगमदः कस्तूरी । अम्बरं वस्त्रम् । कक्षः बाहुमूलम् । कौक्षेयकः खड्गः । उष्णीषः शिरोवेष्टः । उत्तंसकः शेखरः । मांसलदोस्तटः बलवद्बाहुमूलः । विटग्रामणीः विटनायकः । बिभ्रत् धारयन् । नाभ्यस्ताच्छतुरिति नुमभावः । शार्दूलविक्रीडितम् । प्रस्तावना आमुखम् ।

(ततः प्रविशति चम्पकलताविरहविक्लवो निष्कुटवनगतः पल्लवशेखरः)

पल्लवशेखरः -अंसश्लथाम् ... (इति [1]पुनः पुनः पठित्वा[1] स्मृतिमभिनीय) उक्तं च तदानीमतिचकितया तया।

इन्दीवर[2]प्रवरमुद्रणसूचकानि
चन्द्रोपलद्रवनिरोधविबोधकानि।
कर्णे पतन्ति कलुषप्रफलीकृतानि
कामिव्रजस्य चरणायुध[3]कूजितानि ।। १९ ।।

तदधुना यावन्न भवति प्रभाता निशा, तावदितो गच्छामि। (इति गमनं [4]नाटयित्वा[4])

(सखेदम्) अहो किमिदमापतितं दैवहतकेन । अथ दैवमपि किमर्थमुपालभ्यते ? अरुन्तुदं किल कुक्कुटरुतमात्रं कामुकलोकस्य। अलं रुतमात्रमिति सामान्यशब्देन।

---

१-१ - कखयोर्लुप्तोयं भागः २. प्रमद - ग ; ३. सूचितानि - क ; ४ - ४ - कखयोर्लुप्तम्।

---

**टिप्पणी** - निष्कुटवनं गृहसमीपे रचितमुद्यानम् । गृहारामस्तु निष्कुटः इत्यमरः । पल्लवशेखर इति विटस्य नाम । इन्दीवरेषु कुवलयेषु । प्रवरं श्रेष्ठम् । कुक्कुटश्चरणायुध इत्यमरः । कुक्कुटस्य कूजिततानि रुतानि । कामिव्रजस्य कामुकानां समूहस्य । प्रफलीकृतानि अधिकी- कृतानि। वसन्ततिलकवृत्तम्।

अरुन्तुदं पीडाकरम्। विध्वरुषोस्तुदः इति खश्।

तथाहि ।

[1]मघवति यदहल्यासङ्गसौभाग्यहेतुः
सरभसमतिदूरं गौतमं सम्प्रणीय ।
तदनिशमपि भूयः प्रार्थ्यमुत्कण्ठितानां
श्रवण[2]गरदमन्यत्कूजितं कुक्कुटानाम् ॥ २० ॥

(पुनः सोच्छ्वासम्)[3]

अमुष्मिन् मन्दारस्तबकसुभगामोदपदवी-
शिशुक्रीडारम्भप्रणयपवने निष्कुटवने ।
क्वचित्कुञ्जे गुञ्जन्मधुकरवधूशालिनि तया
पुनः क्रीडारम्भः कथमपि च भावी मम कदा ? ॥ २१ ॥

---

१. मवसति - क, मदवति - ख ; २. गरलम् -ग ; ३. मनःसोच्छ्वासम् इत्याधिकं क-खयोः ।

---

**टिप्पणी -**

मघवतीति । श्रवणगरदं कर्णे बिषप्रदम् । कुञ्जं लतादिपिहितोदरं स्थानम् । कामुकाग्रेसरस्य इन्द्रस्य अहल्यासंगमे कुक्कुटरुतेन साहायकमाचरितमिति भावः । मालिनीवृत्तम् ।

अमुष्मिन्निति । निष्कुटवने पवनः मन्दारकुसुमस्तबकैः क्रीडतीति भावः । मधुकरवधूशालिनि भ्रमरीभरिते । शिखरिणीछन्दः । रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी इति लक्षणात् ।

[1]सा सुन्दरी मम कदा नु समेधमान-
स्नेहातिरेकमसृणीकृतदृग्विलासम् ।
शोणाधरद्युतिपरिष्कृतमन्दहासं
सन्दर्शयिष्यति मुखं [2]सुसखं तदिन्दोः ।। २२ ।।

अलमलं तावतोऽपि भागधेयस्य [3]पात्रमयमपि जनः । इदं पुनरलभ्य[4]गोचरया चिन्तयाहमाशासे ।

असमानवयोविलासरम्या
त्रसदेणीशिशुलोललोचनश्रीः ।
कुसुमायुधबाणशक्तिरेका
प्रसवित्री धुरि सा मुदं कदा स्यात् ।।२३ ।।

(विचिन्त्य) का पुनरेतस्य प्रसक्तिरपि यदद्य देवरः पतिमन्दिरं नेष्यति ।

---

१. इयं पङ्क्तिः क-खयोः अस्पष्टा । २. सुसुखं - ग ; ३. पात्रमपि - क, ख ; ४. गोचरतया - क, ख, घ

---

टिप्पणी - सा सुन्दरीति । समेधमानः संवर्धमानः । मसृणं स्निग्धम् । वसन्ततिलकवृत्तम् । भागधेयं भाग्यम् ।

असमानेति । त्रसदेणीशिशुःभीतमृगीपोतः । कुसुमायुधः कामः । प्रसवित्री जनयित्री । धुरि अग्रे । मालभारिणीत्याख्यमर्धसमवृत्तम् । ससजाः प्रथमे पदे गुरू चेत् सभरा येन च मालभारिणी स्यात् । इति लक्षणात् ।



देवरः पत्युः कनिष्ठभ्राता ।

तत्पुनरिदानीं -

कुर्वे किं कुवलयदृङ्मम त्वलभ्या
दुर्वृत्तप्रियसदनं खलेन नीता ।
वर्मायं धृतिमयमञ्जसैव भित्त्वा
मर्माणि व्यथयति मान्मथः कलम्बः ॥ २४ ॥

कथञ्चिदपि -

कुर्वन्नतेन शतधा शिरसा प्रणामं
याचे सदैन्यमधुना विधिना विधे त्वाम् ।
लावण्यसौरभकलामिव लब्धमूर्तिं
तन्वीं निधेहि पुरतः परितोऽपि हृद्याम् ॥ २५ ॥

(सहर्षं) स्पन्दत एवेदानीं दक्षिणं मम चक्षुः तदचिरेण फलिष्यति [१]मम मनोरथः । (चक्षुषी उन्मृज्य परितोऽवलोक्य) कथमियं प्रभातप्राया शर्वरी । तथाहि ।

---

१. मे - ख, ग ;

---

टिप्पणी -

कुर्वे इति । दुर्वृत्तः दुष्टः । खलः दुर्जनः । वर्म कवचम् । कलम्बः शरः । मन्मथस्यायं मान्मथः । प्रहर्षिणीवृत्तम् । म्नौ ज्रौ गः पुरविरतिः प्रहर्षिणी स्यात् इति लक्षणात् ।

कुर्वन्निति । शतधा शतप्रकारैः । विधिना क्रमेण । पुरतः पुरस्तात् । हृद्यां हृदयस्य प्रियाम् । वसन्ततिलकवृत्तम् ।

मुग्धाः केचन मल्लिकापरिमलान् [1]मुष्णन्ति मन्दानिलाः
चञ्च्वा चञ्चलतायुजा प्रियमुखं चुम्बन्ति कोकाङ्गनाः ।
निष्कूजन्ति [2]रसालशाखिशिखरेषूत्साहतः कोकिलाः
निश्शङ्कं क्रमशो बिभर्ति मधुपो नालीकडोलासुखम् ॥ २६ ॥

धत्ते [3]पल्लवितेन पद्मरिपुणा प्रश्लिष्य बाढं करैः
स्वैरं पीतरसेव सम्प्रति शनैः प्राची मुखे *पाण्डुताम्
किञ्चैतेन निशावधूसरभसक्रीडावसानोद्गताः
[3a]स्रस्तस्वेदकणा इव प्रतिदिशं ताराः पतन्त्याकुलाः ॥ २७ ॥

कूजन्त्यत्र शनैः सरलितग्रीवा मिलिन्दाःकलं
पद्मिन्याः प्रियपाणिपीडनविधौ गातुं [4]पुराभ्यासिनः ।
भुक्तार्धं बिसखण्डमच्छगरुतां [5]संसक्तटाकोदरे
त्रोटीगर्भगतं पुरातनमिति ज्ञात्वा बहिः ष्ठीवते ॥ २८ ॥

---

१. नुषणन्ति -क २. च चूत - ग ; ३. पल्लवकेन - ख ; [3a]स्रस्तहदृधगुणा - क, ख, ग ; ४. भ्यासिना - ख ; पुराभ्यासिनाम् - क. घ, ५. संसप्रपारोदरे -क ; *-पाण्डुता इति सर्वमातृकापाठः

---

**टिप्पणी-** मुग्धा इति । रसालशाखिशिखरेषु चूतवृक्षाग्रेषु । मधुपाः भ्रमराः । नालीकडोलासुखं नालीकं कमलमेव डोला, तत्सुखम् । बिभर्ति अनुभवति । मुष्णन्ति चोरयन्ति । शार्दूलविक्रीडितं वृत्तम् । स्वभावोक्तिरलङ्कारः । स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् इति लक्षणात् । धत्ते इति । पल्लवितेन प्राप्तोत्कर्षेण । पद्मरिपुणा चन्द्रेण । प्राची पूर्वा दिक् । कूजन्तीति । सरलितग्रीवाः सरलीकृतकन्धराः । मिलिन्दाः भ्रमराः । अचछगरुतां हंसानाम् । हंसास्तु श्वेतगरुतः इत्यमरः । संसत् समूहः । त्रोटी चञ्चुः । ष्ठीवते क्षरणेन निष्कासयति । शार्दूलविक्रीडितम् ।

तदहं यावन्न प्रचरन्ति जनास्तावदितो गच्छामि । (इति गमनं नाटयित्वा कतिचित्पदानि गत्वा पुरो विलोक्य)

एष [1]विन्यासविकलः चलदङ्घ्रिर्गतांशुकः ।
कम्पमानोरुरभ्येति भूयः स्विन्न[2]कपोलभूः ॥ २९ ॥

(निपुणं निर्वर्ण्य स्वगतं) कथमयं मे प्रियसखो नूपुरको भीत इवागच्छति ? भवतु, पृच्छामि ।

(प्रकाशं) सखे, नूपुरक, कुतश्चकितो धावसि ? [3]किं ब्रवीषि ? (सगद्गदं) "वयस्य, मा शब्दं कुरु । वीरसेनो [4]मामन्वेषयतीति"?

सखे, मा भैषीः । नन्वभ्यर्ण एव ते [5]प्रियसखः खड्गपाणिः पल्लवशेखरः । तदधुना वीरसेनः शतेन सहस्रेण वा योधैरागच्छतु ।

---

१. विन्याविकलः - क, विद्याविकलः - ख ; २. कपालभूः - ग ; ३. किं ब्रवीमि - क, ग ; ४. ममान्वेषतीति - ख ; ५. प्रियसखो खड्ग - घ

---

**टिप्पणी -**

एष इति । गतांशुकः नष्टवस्त्रः । निर्वर्ण्य दृष्ट्वा । प्रियसखः इष्टः सुहृत् । चकितः भीतः । अभ्यर्ण एव समीपे । खड्गः पाणौ यस्य सः खड्गपाणिः । शतेन यौधैः इत्यादिषु विंशत्याद्याः सदैकत्वे संख्याः संख्येय-संख्ययोः इति नियमेन एकत्वं द्रष्टव्यम् । मा भैषीः भयं मा कृथाः । माङि लुङ् । न माङ्योगे इत्यडभावः ।

पश्चात्कृत्वा भवन्तमहमेक एव -

चञ्चद्भुजभ्रमितचण्डकृपाणधारा-
निर्भिन्नशात्रवशिरोधिविनिस्सरद्भिः ।
आरक्तयन् रणधरामपि शोणितौघैः
भूरिप्रतापसरणीररुणीकरोमि ।। ३० ।।

नूपुरक, किं ब्रवीषि ? ''यद्येवमतिदूरीकृतभयोऽस्मि'' इति ? कुतस्त्वयि विद्वेषो [1]वीरसेनस्य ? किं ब्रवीषि ? निजप्रेयस्यां लवङ्गिकायामनुरक्त इति । अहो ! साहसिक ! वीरदारेष्वपि व्याप्नोषि ? अपि शक्नोषि व्याघ्रमुखाद् [2]दंष्ट्राङ्कुरानुद्धर्तुम् ? किं न जानासि मानधना खलु शूरसंसदिति ? किं ब्रवीषि ? ''जानन्नपि[3] कुसुमायुधेन [4]परवानस्मीति'' ? सत्यमेवेदम् ।

---

१. प्ररसेनस्य - क ; २. दंष्ट्रङ्कुरमुद्धर्तुम् - ख, ग; ३. जानन्नपि इति कपुस्तके नास्ति । ४. परमस्मीति - क, परवास्मीति - ख;

---

**टिप्पणी -** चञ्चदिति । शिरोधिः ग्रीवा । शोणितौघैः रक्तप्रवाहैः । भूरिप्रतापसरणीः महापराक्रममार्गान् । अरुणीकरोमि, अनरुणान् अरुणान् सम्पद्यमानान् करोमि । अभूततद्भावे च्विः । च्वौ चेति दीर्घः । वसन्ततिलकम् । वीरदारेषु वीरस्य पत्न्याम् । दाराः पुंसि च भूम्न्येव इति पत्नीवाचकस्य दारशब्ददस्य पुंस्त्वं बहुत्वं च । दंष्ट्राङ्कुरान् अङ्कुरसदृशीः दंष्ट्राः इत्यर्थः शूरसंसत् वीरसमूहः । कुसुमायुधः मन्मथः । परवान् पराधीनः ।

कथञ्चित्पश्यन्तः कमलनयनामात्रमपि वा
मनोजव्यापारैस्सपदि [1]हि भवन्त्येव विवशाः ।
[2]स्थिते त्वेवं साक्षात्प्रणयभवपूर्वं मृगदृशा
पुमांसः सन्दृष्टाः प्रमुषितधियः के न जगति ? ।। ३१ ।।

कथय सखे, तदनुरागस्य पलायनमात्रं फलं, किमप्यन्यदस्ति ? किं ब्रवीषि ?

आरूढं शयनीयमार्द्रवचनं चाविष्कृतं, कान्यपि
स्पृष्टान्यङ्गपदानि [3]कुन्तलभरः स्फारीकृतः पाणिना ।
आश्लिष्याधरबिम्बचुम्बनविधौ तस्यास्सयंत्ने मयि
क्रूरेणारसिकेन हन्त विधिना कोऽप्यन्तरायः कृतः ।। ३२ ।।
इति ?

हा हन्त, गुडोदकपानावसरे को वा कण्टिकितः कण्ठपदे ? किं ब्रवीषि ? ''को वा निशीथे राजमन्दिरात्स्व[4]भवनमागतं वीरसेनहतकमन्तरेणेति ? तर्हि कथं निर्गतोऽसि ? किं ब्रवीषि ?

---

१. 'ह' - इति क, ख   २. स्थित्वेत्येवं-क ; ३. कुण्डलभरः - क, ख ; ४. मन्दिर - ग ।

---

**टिप्पणी** - कथञ्चिदिति । प्रमुषितधियः नष्टबुद्धयः । शिखरिणीवृत्तम् । आरूढमिति । अङ्गपदानि अवयवस्थानानि । कुन्तलभरः केशपाशः । स्फारीकृतः विशालीकृतः । विधिः । नियतिः । अन्तरायः विघ्नः । शार्दूलविक्रीडितवृत्तम् । गुडोदकं पानकम् । निषीथे मध्यरात्रे ।

‘दृष्ट्वा स मां करधृतासिरुदग्रकोपाद्-
द्वारे बहिर्जडतया स्थितवान्निहन्तुम् ।
दिष्ट्यैव निष्कुटवनाच्चलितस्सधैर्यं
सालं विलङ्घ्य समुपागतवानिह द्राक्’’ ॥३३॥

इति ?

साधु नूपरक ! सम्प्रदायाभिज्ञोऽसि जारमार्गस्य । नूपुरक, किं ब्रवीषि ? कुतस्त्वमप्यत्रेति ?

चित्रवर्मणो निष्कुटवनात् । किं ब्रवीषि ? कया सङ्केतितमिति ?

(दीर्घमुष्णं च निःश्वस्य स्वगतम् )

किमस्मै निवेद्यमुत्पन्नविलीनमनोरथान्निर्विण्णेन मया ? (प्रकाशम्) न कयाचिदपि । किं ब्रवीषि ? [2]ममापि गोप्यमस्तीति ? तर्हि शृणु, कथयामि । चम्पकलतया । किं ब्रवीषि ? दुस्सहस्ते तस्या विरहः ।

---

१. च्छुरितः - क, चरितं - ख ; २. किमिहापि -क

---

**टिप्पणी -**

दृष्ट्वेति । करधृतासिः करे धृतः असिः येन सः । सालं प्राकारम् । प्राकारो वरणः सालः इत्यमरः । वसन्ततिलकवृत्तम् । अभिजानातीति अभिज्ञः । आतश्चोपसर्गे इति कप्रत्ययः । संप्रदायस्याभिज्ञः सम्प्रदायाभिज्ञः । जारमार्गस्य विटसरणेः ।

अङ्गानि सम्प्रति कृशा -

न्यलसा दृष्टिर्विपाण्डु वदनं ते।

कथयन्ति कुपितमन्मथ-

कार्मुकनिर्मुक्तसायकौद्धत्यम् ।। ३४ ।।

अलं सा पतिगृहं गमिष्यतीति विषादेन । सन्ध्यासमय एव योजयामि तया सह तत्रभवन्तमिति ? भवतु तथा। अनया [1]रथ्यया गच्छावः इति ? तर्हि तथा कुर्वः । सखे पश्य पश्य, अस्यां रथ्यायाम् ।

प्रागालोकात्परमपुरुषस्यागमं पद्मबन्धोः

द्रागालोच्य द्रढिम[2]विधुरा धावतः पङ्कजारेः ।

लक्ष्मच्छाया [3]भुवनपतिता लक्ष्यते विप्रकीर्णा

मङ्क्षु स्रस्ता तिमिरपटली मौलिषु क्ष्माधराणाम् ।। ३५ ।।

---

१. रथ्या - ख २. विधु धावतः - ख ; ३. भवनपतिता - ग

---

**टिप्पणी** - अङ्गानीति । विपाण्डु विशेषतो धवलम् । कार्मुको धनुः । सायकः बाणः । औद्धत्यम् उद्धतभावः । कामबाणैः अधिकं पीडितोऽसीति भावः । गीतिश्छन्दः । आर्याप्रथमदलोक्तं कथमपि यदि लक्षणं भवेदुभयोः । चरमे कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः इति लक्षणात् । प्रागिति । आलोकः आतपः । पद्मबन्धुः सूर्यः । द्रढिमविधुरा दृढत्वशून्या । पङ्कजारिः चन्द्रः । तस्य लक्ष्मच्छाया चिह्नच्छाया । मङ्क्षु शीघ्रम् । मौलिषु शिखरेषु । क्ष्माधराणां पर्वतानाम् । गम्योत्प्रेक्षा । सूर्यः आगमिष्यतीति भिया धावतः चन्द्रात् भूमौ पतिता लक्ष्मच्छायेव क्ष्माधराणां मौलिषु शीघ्रं स्रस्ता तिमिरपटली लक्ष्यते इति भावः । मन्दाक्रान्ता वृत्तम् ।

पश्य तावदितः -

क्रीडान्तश्रमतान्तकान्तनयनं किञ्चिद्विमृष्टाधर-
च्छायं सौरभशेषचित्रकपदप्राञ्चन्मुखाम्भोरुहम् ।
पुम्भावप्रतिपादकैरवयवैर्भूयोमनोहारिभिः
स्फारं [1]सीधुमदेन याति शनकैर्वाराङ्गनानां कुलम् ।। ३६ ।।

किञ्च -

पश्चात्प्रापितकण्ठहारनिचयान् प्राङ्[2]निक्षिपन्त्यः करै-
रादायाधरबिम्बमङ्गुलिदलै[3]रालोकमाना मुहुः ।
निःश्वासोर्ध्वविकम्पितस्तनशिखानिर्व्यूढ[4]कूर्पासका
निद्रामन्दिरतः प्रभातसमये निर्यान्ति वाराङ्गनाः ।। ३७ ।।

अपि च ,

स्फायत्प्रौढकुसुम्भरागघटनासुस्निग्धचण्डातक-
च्छायादन्तुरितोरुभागसुषमालोकप्रमुह्यद्विटम् ।
स्वैरास्वादित[5]सीधुसारसुरभिश्वासप्रतोलीपतद्-
भृङ्गत्रासविघातपाणि[6]चतुरं माणिक्यमालोक्यते ।। ३८ ।।

---

१. साधुः - ख; २. निक्षिपन्त्या - क, ख ; ३. तालाङ्कमाना - क.
४. कूर्पासक निद्रा - घ ; ५. सिन्धु - ख ; ६. चुकुरं - क, चिकुरं - ख

---

**टिप्पणी -** क्रीडेति । तान्तं श्रान्तम् । कान्तं सुन्दरम् । किञ्चिद्विमृष्टा ईषद्विगलिता, अधरच्छाया अधरकान्तिः यस्य तत् । स्फारं विशालम् । सीधुमदेन मद्यपानजनितेन मदेन । पुम्भावप्रतिपादकैः पुरुषायिताख्यरतिद्योतकैः । पश्चादिति । कूर्पासकः चोलः । वाराङ्गनाः वेश्याः । शार्दूलविक्रीडितं छन्दः । स्वभावोक्तिरलङ्कारः । स्फायदिति । कुसुम्भं महारजनाख्यं पुष्पम् । तस्य रागः वर्णविशेषः । अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम् इत्यमरः । सीधु मद्यम् । श्वासप्रतोली श्वासस्य मार्गः । माणिक्यं वेश्यारत्नम् ।

पश्य दक्षिणतः –

बिभ्र[1]त्खण्डपटीविवेष्टितमुपर्युष्णीषकं मूर्धनि
स्वर्णेनानतिशायिना विरचितां गोधूममालां गले।
फाले कुङ्कमपुण्ड्रयुग्मविलसद्भूयोहरिद्राक्षतः
कोऽयं पुस्तकपाणिरद्य रभसादायाति वीथीमुखे ।।३९ ।।

किं ब्रवीषि ? किं न जानासि घूर्जरपौराणिको रामभट्टः स्वर्णगुप्तस्य गजेन्द्रकथां [2]निगद्य पुनरागच्छतीति ? सखे, भूयसः कालाद्विषयसुखविरोधी श्रोत्रियहतको दृष्टः । किं ब्रवीषि ? भवत्यन्यत्रैव तथा । स्वयं तु पुराणपठनपरिचयाद्रहस्ये वैषयिकं सुख*मनुभवतीति ?

आकर्ण्यैव पुराणमञ्जलिशतेनाराध्य गन्धं स्रजः
ताम्बूलं च समर्पयन्ति [3]विधवा भक्त्या महत्या दिवा।
रात्रौ स्नेहवशेन सौरभमयीं वीटीं च दत्त्वा मुखे
पुम्भावं [4]गुरुदक्षिणां विदधते पुष्पायुधप्रीतये ।। ४० ।।

साधु पौराणिक, साधु !*

---

१. पण्डपटी – क, काण्डपटी – ख ; २. निशाम्य – क ; ३. विधिवद् – क
* - * – अयं भागः खपुस्तके नास्ति ; ४. गुरुणां – ग

---

**टिप्पणी** – बिभ्रदिति । उष्णीषकं शिरोवेष्टनम् । मूर्धनि शिरसि । फाले अलिके । पुस्तकं पाणौ यस्य सः पुस्तकपाणिः । स्वभावोक्तिरलङ्कारः । शार्दूलविक्रीडितम् । श्रोत्रियः छान्दसः । वैषयिकं विषयानुभवजन्यम् । आकर्ण्येति । पुष्पायुधप्रीतये मन्मथस्य सन्तोषाय । स्रजः मालाः । सौरभमयीं परिमलभरिताम् । वीटीं ताम्बूलिकाम् विदधते कुर्वन्ति । शार्दूलविक्रीडितम् ।

इतः किञ्चिदुत्तरतः पश्य -

ताटङ्कीयद्युतिकिसलयैस्तन्वती विद्युदाभां
वेणीवल्लीग्रथितसुमनःसौरभाक्रान्तवीथी ।
साक्षादेषा रतिमपि पराकुर्वती स्वाङ्गभासा
चक्षुष्मत्तां सफलयति मे सुन्दरी काचिदग्रे ।। ४१ ।।

आस्तामेतत् । पुरो वर्तते नयनोत्सवः ।

सोत्कम्पस्तनमण्डलं [१]पिदधती चेलाञ्चलेनासकृ-
त्पर्यायस्खलितौ पदौ कथमपि द्रागर्पयन्ती क्षितौ ।
पश्यन्ती स्वमितस्ततोऽपि च जनं प्रान्ते चलन्त्या दृशा
बाला भानुरुदेष्यतीति चकिता तूर्णं विनिष्क्रामति ।।४२ ।।

किं ब्रवीषि ? इयं किल कलवाणी नाम कामगुप्तस्य गृहिणी त्वत्सुहृदा कमलाक्षेण वशीकृतेति । अहो, मदीयमेवेदं भागधेयम् ।

---

१. विदधती - क,ख

---

**टिप्पणी -**

ताटङ्कीयेति । ताटङ्कः कर्णाभरणम् । सुमनसः पुष्पाणि । चक्षुषी अस्य स्तः इति चक्षुष्मान्, तस्य भावः चक्षुष्मत्ता । पराकुर्वती पराभवन्ती । स्वाङ्गभासा स्वशरीरकान्त्या । मन्दाक्रान्तावृत्तम् । सोत्कम्पेति । पिदधती आवृण्वती । चेलस्य अञ्चलेन सीमाभागेन । तूर्णं शीघ्रम् ।चकिता भीता । शार्दूलविक्रीडितम् ।

(पुरोऽवलोक्य)

प्राचीनाचलसौधशृङ्गमकुटीडोलाविहारोत्सव-
स्वायत्तीकृतचेतसो दिनरमानाम्ना सतः स्त्रीशिशोः ।
उत्साहाय तदूर्ध्वभागघटिता मात्रा कयाप्यन्तिके
गुञ्जन्मञ्जरिकेव भाति दिनकृद्बिम्बं कुसुम्भारुणम् ।। ४३ ।।

अपि च

हर्तुं मानधनानि पान्थसदसां सान्द्रे जगन्मान्दिरे
[1]सोद्भेदं[1] विवरे कृते तनुभुवा चोरेण धीरात्मना ।
धात्रा [2]तत्समभावतः स्थगयितुं कृत्वा तदारोपितं
सक्तं कुङ्कुमपङ्क[3]मण्डलमिव व्यक्तो रविर्जृम्भते ।। ४४ ।।

तदनु किल प्रतिकलोप[4]चीयमान[5]मदारम्भशुण्डावलय [6]विक्षिप्त

---

१. कपुस्तके अस्पष्टम् । खपुस्तके लुप्तम् । २. सम भासतत्सगइतुं - ख ;
३. उमण्डल इव - घ ४. जीय - ख, ग ; ५. मदरम्भ - क, ख, ग ;
६. विजयक्षिप्त - क, वियक्षिप्त - ख ;

---

**टिप्पणी** - प्राचीनेति । स्वायत्तीकृतचेतसः वशीकृतमनसः । दिनरमा दिवसलक्ष्मीः । गुञ्जन्मञ्जरिका शब्दायमानः क्रीडनकविशेषः । दिनकृद्बिम्बं सूर्यमण्डलम् । शार्दूलविक्रीडितम् । हर्तुमिति । पन्थानं गच्छन्तीति पान्थाः । पान्थानां सदांसि पान्थसदांसि, तेषां पान्थसदसाम् । तनुभुवामन्मथेन । धीरात्मना कुशलधिया । धात्रा ब्रह्मणा । स्थगयितुमाच्छादयितुम् ।उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितम् ।

[1]सुरकरिकुम्भसम्भावितसिन्दूरपरागसमुदय इव, गगनाटवीतटप्रकरग्रहोत्सवावसरप्रकीर्णकुसुम्भरसप्रभामण्डल इव, अभ्यर्णरूढपलाशकुसुमप्रभाप्रसर इव, *अनतिचिरनिर्वृत्तनिशाशशाङ्ककरग्रहोत्सवावसरप्रकीर्णकुसुम्भरसप्रभामण्डल इव, अभ्यर्णपद्मिनी[2]करग्रहार्थमागमिष्यतः पद्मबन्धोः पुरोभागघटितहरितोपलमयवितान*मयूखपुञ्ज इव, गगनसरःप्रदेशप्रबुद्धहल्लकतल्लजमरीचिनिचय इव, लोचनगोचरस्समवाय इव आरुण्य[3]वर्णस्य, सम्प्रदायगुरुरिव पद्मरागद्युतेः, सहोदर इव धातुवर्गस्य, सुहृदिव कोकानुरागस्य, सीमन्त इव लाक्षाश्रियः पुरत एव परिपतति बालातपः ।

वक्षोजेषु नखक्षतानि सुदृशां लाक्षा[4]द्युतिः पादयोः
सीमन्तेषु च कुङ्कमद्रवभरस्ताम्बूलरागोऽधरे ।
लग्नाश्चम्पकमालिकाः कचतटे रक्तोत्पलं कर्णयोः
बन्धूकद्युतिरेक एव बहुधा बालातपो दृश्यते ।। ४५ ।।

---

१. ''सुर'' इति नास्ति - क, ख ; *- * - अयं भागः कपुस्तके अस्तव्यस्ततया लिखितः । २. पाणि - ग ; ३. वर्गस्य - क, ख ; ४. रसं - क, ख, घ ;

---

टिप्पणी - तदन्विति । करग्रहोत्सवः - विवाहः । अभ्यर्णं समीपम् । हरितोपलं इन्द्रनीलशिला । वितानम् उल्लोचः । मयूखः किरणः । कोकः चक्रवाकः । लाक्षा अलक्तकम् । बालातपः बालसूर्यप्रकाशः । हल्लकं रक्तसन्ध्यकम् । वक्षोजेष्वितिति । वक्षोजः स्तनः । बन्धूकपुष्पस्य द्युतिरिव द्युतिर्यस्य सः बन्धूकद्युति : । पर्यायालङ्कारः । पर्यायो यदि पर्यायेणैकस्यानेकसंस्थितिः इति लक्षणम् । अथवा उल्लेखालङ्कारः । एकस्य बहुधोल्लेखात् । शार्दूलविक्रीडितम् ।

अपि च -

प्राचीपङ्कजलोचनाकुचतटीगाढाङ्कपालीमिलत्-
काश्मीरद्रवमुद्रणादिव भरं रक्तस्समि[1]न्धे र[1]विः ।
श्रान्तिं कैरविणीसमागमकृतां [2]मोक्तुं विनिद्रावशा-
दिन्दुः पश्चिमशैलकन्दरकुटीमीषत्प्रभो विन्दति ॥ ४६ ॥

पुरोऽवलोक्य -

कोऽयं जराज[3]र्झरितजीर्णकपोलभागः [4]पलितपाण्डुश्मश्रुमूर्धजः छिद्रपरिधानकृतोत्तरीयो वर्षीयानपि द्रुतमभ्येति ? (निपुणं निर्वर्ण्य) अये ! [5]अयं कविदत्तभावुको वेशवाटीपुरोहितस्तल्लुभट्टो नाम शशिप्रभागृहादायाति ।

वामेनैव करेण दुस्सहभरं पञ्चाङ्गमञ्चत्कुशं
ताम्बूल[6]स्रुतबिन्दुपाटलरुचिं सव्येन यष्टिं दधत् ।
[7]उक्त्या[7] नाम तिथेश्च भं च करणं योगं पठन्व्युत्क्रमात्
द्वात्रिंशद्घटिकास्तु वासर इति [8](ज्योतिष्य) माख्यात्यसौ ॥ ४७ ॥

---

१-१ - खपुस्तके नास्ति । मिन्दोश्छविः - क ; २. रोक्तुं - ख ; ३. जर्झरिजीर्ण - ख ; ४. पलीव - क ; ५. आयनविदत्त - क ; ६. स्मृत - क ; ७-७ - खपुस्तके नास्ति । ८. लुप्तम्

---

टिप्पणी - प्राचीति । प्राची दिगेव पङ्कजलोचना नारी इति रूपकम् । कैरविणी कुवलयिनी । कन्दरो गुहा । शार्दूलविक्रीडितम् । वामेनेति । सव्येन दक्षिणेन । शार्दूलविक्रीडितम् ।

नूपुरक,

किं ब्रवीषि ?

यावन्न चुम्बति शशी रक्तस्सन् यामिनी[1]मुखम् ।
तावत्त्वामपि तन्वङ्ग्या घटयिष्यामि कुत्रचित् ।। ४८ ।।

इति ? सखे, सम्प्लावितकर्णोऽस्मि घटयिष्यामीति सुधासार-शीतलया सूक्त्या ।

तथा हि -

सुरभितमरन्दलहरी-
सुकुमारविनिद्रकुसुमसौरभ्यम् ।
कथमपि न [2]मामकमुदे
घटयिष्यामीति तव गिरा सदृशम् ।। ४९ ।।

किं ब्रवीषि ? कियन्तं कालं सोढव्यो विरहवेग इति ? सखे, सोढुं कथं शक्नुयाम् ?

---

१. मम - ख ; २. मामक मुदा - क ;

---

टिप्पणी -

संप्लावितं सम्पूरितम् । सुधायाः अमृतस्य, आसारः धारासम्पातः तद्वत् शीतलया ।

सुरभितेति । सुरभिता सुगन्धिः या मरन्दलहरी मकरन्दवीचिः तया सुकुमारं, विनिद्रं विकसितं च यत्कुसुमं, तस्य सौरभ्यं परिमलः । गीतिश्छन्दः ।

चेतः कातरयत्यलं स्थगयति प्रज्ञा[1]मयीं चेतनां
प्रत्यङ्गं वितनोति कम्पमधिकं दूरीकरोति [2]द्रुतम् ।
आवेगो विरहातिरेकजनितस्तस्याश्चकोरीदृशः
किं वक्ष्यामि ? कथं करोमि ? कुरुते माञ्चापि किञ्चान्यथा ॥ ५० ॥

(पुरोवलोक्य)

एष किल प्रतिपदविजृम्भमाणमदनमदारम्भवारभामिनीकुच-कुम्भपरीरम्भसङ्क्रान्तकुङ्कुमपरागपरिष्कृतभुजान्तरः अतिवृत्त-पृथुलमुक्ताफलघटितकर्णाभरणमयूखमांसलकपोलभागः, अभिनवकुसुम्भरससम्भावित[3]कनकमयोष्णीषपार्श्वप्रलम्ब-मानमालतीकुसुमशेखरः, रतिभरविवशविदग्धविलासिनीरचित-किंशुकमुकुलायमाननवीननखक्षताङ्कितकपोलफलकः, रतान्त-तान्तचकोरवधूनिपीतचन्द्रिकोपमानचीनांशुकः दृश्यमान[4]तरल-हारलतालङ्कृतकन्धरः, अतिविपुल[5]भुजान्तराललिप्त[6]हरिण-मदविलोलितहरिचन्दनपरिमलघुमुघुमितदिशावकाशः सुरभि-लकर्पूरशकलसंसर्गितवीटीरसप्रश्लेषनितान्तपाटलितदन्तच्छदः,

---

१. प्रज्ञामयां - क, पाज्ञामार्यीं - ख ; २. धृतिम् - क धृतम् - घ ;
३, नक - ख ; ४. तरव - ख ; ५. विजान्तराल - क ; ६. परिण - क, ख

---

**टिप्पणी** – चेतइति । चकोरीदृशः सुन्दर्याः । चकोर्याः दृशाविव दृशौ (नेत्रे) यस्याः सा चकोरीदृक् । तस्याः । शार्दूलविक्रीडितम् । एष इति । वारभामिनी वेश्या । परीरम्भः आलिङ्गनम् । पृथुलं महत् । किंशुकस्य पलाशस्य मुकुलः कुड्मलः । स इव आचरतीति किंशुकमुकुलायमानः । रतस्य सुरतस्य अन्ते समाप्तौ तान्ता श्रान्ता या चकोरवधूः कोकाङ्गना, तया निपीता या चन्द्रिका कौमुदी, सा उपमानं यस्य तादृशं चीनांशुकं धृतवानिति भावः । हरिणमदः कस्तूरी । दिशावकाशः दिगन्तरालम् ।

अभिनवसिन्दूररचितचित्रकोदारचारुतरललाटः, असकृदाघ्रात-पल्लवोल्लसितकेतकीकुसुमसमुदयो मत्प्रियसखः कमलाक्षः सत्वरमितो गच्छति । कमलाक्ष, पश्यन्नपि मां कथमनालपन् अन्यतो गच्छसि ?

किं ब्रवीषि ?

अद्य कश्चिदैन्द्रजालिकः शशिप्रभामन्दिरद्वारे विविधान्यद्भुतानि दर्शयिष्यतीति प्रस्थितो वेशवाटम् । तदहमपि कवेरजातटे मुखमुन्मृज्य त्वरितमागमिष्यमि । [1]त्वमप्यत्रागच्छ । अत्रैवावयोः सँल्लापो भविष्यति इति ?

(स्वगतम् ) अयं कश्चिन्मम विरहखेदापनयोपायः । (प्रकाशं) कमलाक्ष, तर्हि वेशंवाटीं गच्छामि ।

(इति पदान्तरं गत्वा)

(पुरोवलोक्य)

गुञ्जन्नूपुरशोभमानचरणद्वन्द्वार्पणस्तोकित-
[2]क्षोणी पाणितलोपगूहितपुनःस्रस्तोत्तरीयाञ्चला ।
चाम्पेयप्रसवस्रजा विलसितप्रायामवेणीलता
[3]रथ्यावर्त्म परिष्करोति चतुरा रामा तनुच्छायया ।। ५१ ।।

---

१. त्वमत्रागच्छसि – त्रैवा ... – क ; २. कोणी – क ; ३. रक्षावर्त्म – क

---

**टिप्पणी** – कवेरजातटे कावेरीतीरे । उन्मृज्य क्षालयित्वा । पाटलितः लोहितीकृतः, दन्तच्छदः ओष्ठः यस्य । असकृत् पुनः पुनः । वेशवाटं वेश्यागृहम् । गुञ्जन्निति । उत्तरीयं संव्यानवस्त्रम् । चाम्पेयः चम्पकः । तस्य प्रसवः पुष्पम् । प्रायामा दीर्घा । रथ्या रथसमूहः, तस्याः वर्त्म मार्गः । सुन्दरी रमणी रामा इत्यमरः । तनुच्छाया शरीरकान्तिः । तया । परिष्करोति सुन्दरीकरोति । शार्दूलविक्रीडितम् ।

(विमृश्य)

इयं किल [1]कामपालस्य कनीयसी पत्नी स्नातुं निर्गता निजगूढवल्लभस्य नारायणभट्टस्यागमनं प्रतीक्षमाणा तिष्ठति। अहो ! स एव खलु धन्यः। तथा हि।

आकृष्यान्तिकमन्तरेण रभसादारोप्य पर्यङ्किकां
आसज्याननमानने रदपटीमास्वादयन्त्या रहः।
गाढप्रेमविवर्धमानपुलकप्रस्वेदवक्षोजया
यस्त्वैवं परिरभ्यते कुलटया सोऽयं कृतार्थो युवा ॥ ५२ ॥

अपि च -

[2]रतभरचलिते पराङ्गनानां
रसवशदष्ट[3]दरच्युताधरोष्ठम्।
कुचयुगशिखरे निवेश्य वक्षः
[4](कृत) सुकृताः खलु केचन [5]स्वपन्ति ॥ ५३ ॥

---

१. नामपालस्य - ख ; २. रतेभिर - क, रते भर - ख ; ३. धर - क ;
४. सुकृतं खलु - क, कलमसुकृताः - ख ; ५. श्रवन्ति - क, ग ;

---

**टिप्पणी** -इयमिति। कनीयसी यवीयसी। आकृष्येति। पर्यङ्किकां शयनीयम्। रदपटीम् अधरम्। कुलानि अटतीति कुलटा। असतीत्यर्थः। कृतार्थो धन्यः। परिरभ्यते आलिङ्ग्यते। शार्दूलविक्रीडितं छन्दः। रतेति। कृतसुकृताः कृतपुण्याः। अर्धसमवृत्तं पुष्पिताग्राख्यम्। नगणयुगरयेण पुष्पिताग्रा नजजरगैर्विदिता जिनव्रतांशैः। इति लक्षणम्।

अहो। [1]विचित्रिता खलु पतिवञ्चनवैदग्धी कुलटासु। तथा हि।

आयान्तं विटमुत्सुकापि सदनं सामान्यतो वीक्षते
पार्श्वे सत्स्वपि सम्मुखागतजनेष्वाभाषते च च्छलात्।
नक्तं भोजयति क्षुधातुर इति प्रख्यापयन्ती घृणां
[2]स्मृत्वा हन्त तमेव जातु चतुरा पत्या [3]सह क्रीडति[3] ॥ ५४ ॥

इयमिदानीं समन्ततः प्रवर्तमानमदनमहोत्सवारम्भसम्भारसम्पादनसम्भ्रमगतागतयुवतिजनपदकिसलयझलंझलायमाननूपुररवमुखरितवीथीमुखा [4]नखलिखितशरच्चन्द्रचन्द्रिकाधवलमरकतमयबहिर्वितर्दिकोपरिभागप्रलम्बमानवितानचीनांशुका, शुकशारिकामुखोद्घुष्यमाणमदनागमसिद्धान्तपथानभिज्ञनवीनविटप्रबोधनजागरूक[5]स्मराचार्यसंकुला, कुङ्कुमरससंकीर्णबाह्यप्रघाणधोरणीनिबद्धवैदेशिक[6]पल्लवजन[7]पणीकृतमदसिन्धुरगण्डस्थलोद्भूतमदासारशबलमारुतास्वादनजनित[8]जुगुप्सापनोदनोत्सुकरसिकजना[9]घ्राततरुणीजनकपोलपरिमला परितः परिमिलित [10](तटस्थ)

---

१. विचित्रता - ख, घ; २. शृत्वा - क, ख; ३. पि क्रीडते - क, रहः क्रीडते - ख, घ; ४. सखिलिखित - क; ५. स्मकराचार्य - क; ६. पल्लवजजन - क; ७. पणीकृत - क; ८. जिगुप्सा - क,घ; ९. घात - क, ख, घ; १०. तातस्थ - क, तातस्त - ख,ग,घ

---

**टिप्पणी** - आयान्तमिति। नक्तं रात्रौ। घृणां करुणाम्। कारुण्यं करुणा घृणा इत्यमरः। शार्दूलविक्रीडितम्। इयमिति। वितर्दिका वेदिका। अस्त्री वितानमुल्लोचः इति अमरः। चीनांशुकं कौशेयवस्त्रम्। प्रघाणः गृहद्वाराद् बहिः स्थितः प्रकोष्ठः। पल्लवजनाः विटाः। सिन्धुरः गजः।

पल्लवमुखोपन्यस्ततत्त[1]त्समागमनसम्प्रदायचातुरीनिर्वर्णनोदीर्ण-चतुरिमसर्वस्वप्रदर्शनोत्कण्ठितसुकुमारकन्यकाशत[2]संवर्गिता, [2a]सौहृदवर्गवारविलासिनीसौभाग्यनिराकरणसूचकजयस्तम्भायमान[3]सदलकदलीनिकुरुम्बनीरन्ध्र[4]बहिरलिन्दा, क्वचिद् विनोदि-जनताड्यमानमृदङ्गनिर्घोषा, क्वचिच्चतुरयुवतीकरनखमुख-मुखरीक्रियमाणवल्लकीनिनादमेदुरा, क्वचिदासज्यमानमुरली-प्रभेदा, क्वचिदभिनीयमानसरसगीतप्रबन्धा, क्वचिदालोच्यमान-[5]भरतागमसम्प्रदाया, क्वचिदभिनन्द्यमान[a]विदग्धजनलिखित-नखक्षतप्रभेदा, क्वचिदुपक्रम्यमाणश्रोत्रिय[6]सुरसापहासा, क्वचिदनुनीयमानसुरभिलपटवासपट्टिकाप्रसूना, क्वचित्परि-शील्यमान[a]सुरभिचन्दनामोदा, क्वचित्प्रस्तूयमानचण्डातकाभि-रूप्या, क्वचित्सम्पाद्यमानमहार्घवेणीलतान्तकलम्बशासन[7]चीटिकायमानरसिकचेटिका रङ्गपुरवेशवाटिका ।

---

१. समागमसम्प्र - ख ; २. संवर्णिता - क ; २a. सौहृद्वर्ग - क, ख ; ३. सदलकलीनिकुरुम्ब - क ; ४. बबातलिन्दा - क ; ५. भारतागम् - घ; ६. सुततापहासा - क , सुतायहासा - ग ; ७. बीडिकायमान - क; a - a. अयं भागो गपुस्तके नास्ति।

---

**विप्पणी** – निकुरुम्बं समूहः । अलिन्दः द्वाराद्बहिः प्रकोष्ठः । वल्लकी वीणा । निनादमेदुरा नादभरिता । मुरली वेणुवाद्यम् । भरतागमः नाट्यशास्त्रम् । विदग्धजनः रसिकलोकः । श्रोत्रियः छान्दसः । आमोदः अतिनिर्हारी परिमलः । पटवासः पिष्टातः । पिष्टातः पटवासकः, प्रसूनं पुष्पफलयोः, अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमस्त्रियाम् इत्यमरः । आभिरूप्यमभिरूपता । महार्घं बहुमूल्यम् । लतान्तकलम्बः पुष्पबाणः, मन्मथ इत्यर्थः । रङ्गपुरं श्रीरङ्गपत्तनम् ।

(वेशवाटीप्रवेशं नाटयित्वा)

अत्र हि -

आदावङ्कुरतामुपेत्य लसता केनापि वा वर्त्मना
मुग्धेन स्तनकुड्मलेन च समं वाराङ्गनानां शनैः ।
चाञ्चल्यं दृशि वक्रता च वचने दन्तच्छदे स्वादिमा
वैदग्ध्यं च विवर्धते स्वरसतस्सर्वासु चेष्टास्वपि ।। ५५ ।।

ऊर्ध्वमवलोक्य -

अभ्यर्णस्फुरदच्छसौधवलभी[1]वल्गत्कपोताङ्गना-
वैदुष्याभ्यसनोद्यतानि [2]परितो निःशङ्कमेवाधुना ।
श्रूयन्ते रतिकूजितानि सुदृशां पुम्भावकेलीचल-
न्मञ्जी (?) गर्भझलज्झलारवसुधामिश्राण्य[3]विश्रामतः ।। ५६ ।।

पणं निष्कृष्य द्राक् सपदि शतनिष्कार्धममलं
दुकूलं दीर्घार्घं स्वककरपुटीसात्कृतमभूत् ।
अधः कृत्वा सा मामविनयवती पौरुषमयं
रतिं चक्रे चक्रोपमकुचयुगा सा दिनयुगे ।। ५७ ।।

---

१. वल्गत्कपोलाङ्गना - ख ; २. परितो - क ; ३. विश्राणतः - क

---

टिप्पणी - आदाविति । स्वादिमा स्वादुत्वम् । वैदग्ध्यं रासिकत्वम् । शार्दूलविक्रीडितं वृत्तम् । अभ्यर्णेति । गोपानसी तु वलभी इत्यमरः । सुदृशां सुन्दरीणाम् । अविश्रामतः सततम् । वैदुष्यं विद्वत्ता । मञ्जीगर्भशब्दस्यार्थो न ज्ञायते । शार्दूलविक्रीडितं वृत्तम् । पणमिति । पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च, दीनारेऽपि च निष्कोऽस्त्री इति चामरः । स्वका स्वीया या करपुटी,

विक्रीतशिष्टविपणिस्थितशुष्कदीर्घ-
कोशातकीसदृशलम्बकुचावनम्राम् ।
वैदेशिकः खलु विटो जरतीं विकृष्य
क्रोशत्यहो दिश पणं पुनरित्यलज्जम् ।। ५८ ।।

अविचारितरमणीयः खलु शुष्कविटजरद्गणिकयोर्नीरसो विवादक्रमः ।

ब्रवीम्यत्रत्या ाामभिनवविटानयनवैदग्ध्यम् ।
तिष्ठन्त्यो दिवसावसानसमये बाह्ये वितर्दीमुखे
व्याजीकृत्य किमप्यनन्यमनसः प्रक्रान्तगाना मनाक् ।
नीत्वा स्वस्वगृहाणि कम्रवचसा [१]रागस्पृशा चक्षुषा
पश्चात्कैरपि चेष्टितैर्विटजनान् वेश्या वशीकुर्वते ।। ५९ ।।

---

१. गानस्पृहा - क, ख, घ

---

**टिप्पणी -**

तत्सात्कृतं तद्वशीभूतम् । चक्रः चक्रवाकपक्षी । कोकश्चक्रश्चक्रवाकः इत्यमरः । चक्रः उपमा यस्य तत् चक्रोपमम् । चक्रोपमं कुचयुगं यस्याः सा । दिनयुगे दिनद्वये । शिखारिणीवृत्तम् । रसै रुद्रैश्छिन्ना यमनसभलाग शिखरिणी । विक्रीतेति । विपणिः पण्यवीथिका । कोशातकी ज्योत्स्निका, (शाकविशेषः) जरतीं वृद्धाम् । जरद्गणिका वृद्धवेश्या । वसन्ततिलकवृत्तम् । तिष्ठन्त्य इति । दिवसावसानं सायङ्कालः । वितर्दी वेदिका । कम्रवचसा कमनीयवचनेन । रागस्पृशा अनुरागवता, रक्तवर्णवता वा । कैरपि अवर्णनीयैरित्यर्थः । शार्दूलविक्रीडितम् ।

किञ्च-

आयान्तं विटमाकलय्य परितो दूरे क्षिपन्ती दृशं
[1]तस्याढ्यत्वमपि प्रबुध्य चतुरां सम्प्रेक्ष्य चेटी पुरा।
पार्श्वस्थामनुरञ्जयन्त्यभिनवां कन्यामलङ्कारिणीं
पश्चाज्ज्ञातमिवाभिनीय [2]जरती गेहं [3]समाकर्षति ॥ ६० ॥

विचित्रा [4]पुनरिहत्यानां युगपदनेकविटप्रतारणचातुरी।

[5]एकं भ्रूवलनैः स्मितैस्तदितरं दृष्ट्या परं दीर्घया
वाचान्यं कुचयोस्तटेन च मनाक्सन्दर्शनेनापरम्।
[6]किंञ्चित्किञ्चिदुदञ्चितांशुकरुचिप्रव्यञ्जितोरुश्रिया
सम्प्राप्तान् गृहमेकदैव गणिकाः संमोहयन्ते विटान् ॥ ६१ ॥

आलापेषु विटेन साकमधिकं कालं न संमन्यते
पृष्टं संवदतोऽपि नैव सहते प्राशस्त्यमालिङ्गने।
श्रान्तिं धूर्तसमागमेन दुहितुर्दृष्ट्वा हृदा वेपते
दूरे [7]वञ्चकपल्लवं तु जरती निष्क्रामयत्यञ्जसा ॥ ६२ ॥

---

१. तस्याढत्वमपि - क, ख ; २. चरती - क, ख ; ३. कमाकर्षति - ग ;
४. पुनरिहामात्यानां - क ; ५. एक भ्या - ख ; ६. किञ्चित्कञ्चित् - ग ;
७. पञ्चकपल्लवं - क

---

**टिप्पणी** - आयान्तमिति। आढ्यत्वं धनिकत्वम्। शादूलविक्रीडितम्। इह भवाः इहत्याः। अव्ययात्त्यप्। प्रतारणं वञ्चना। चातुरी चातुर्यम्। एकमिति। प्रव्यञ्जिता परिदर्शिता ऊर्वोः श्रीः, शोभा तया। अंशुकरुचिः वस्त्रशोभा। शार्दूलविक्रीडितम्। आलोपेष्विति। आलापेषु संवादेषु। श्रान्तिम् आयासम्। धूर्तः वञ्चकः। वञ्चकपल्लवः धूर्तविटः। द्राग्झटित्यञ्जसाह्नाय इत्यमरः। निष्क्रामयति विद्रावयति। शार्दूलविक्रीडितम्।

आकृष्यैव दिनावधौ विटजनान् स्वेभ्यो गृहेभ्यो रयाद्
[1]वस्त्राणि द्रविणं मनोहरतरान् भूषाविशेषानपि ।
भुङ्क्ते स्नाति परिष्करोति च पुनः [2]स्वाङ्गान्यनङ्गागमं
स्वाधीते रहसीति वृद्धगणिकाः सर्वां नयन्ते निशाम् ।। ६३ ।।

भूयः पुरा दिवसदत्तधनं निशादौ
रन्तुं [3]समागतविटं जरती विलोक्य ।
रात्रौ त्वदागमनलोपवशाद्विनिद्रा
निद्राति याहि शनकैरिति सम्प्रवक्ति ।। ६४ ।।

अत्र हि -

आरभ्यैव दिनावसानसमयादा प्रातरुच्चावचं
रत्वा स्वैरमनेकधा निशि निशि प्रौढ[4]प्रकारैर्विटाः ।
विश्राम्यन्ति कुचस्थलेषु सुदृशां विस्रस्तवेद्यान्तरा
व्याशीर्यद्दिनरात्रियामघटिकाभेदप्रबोधा रहः ।। ६५ ।।

---

१. भस्त्राणि - क ; २. स्वङ्गान्यनङ्गागमं - ख ; ३. समागतमिदं - क, ख, घ; ४. प्रकाशैर्विटाः - क, ख, ग

---

**टिप्पणी** - आकृष्येति । रयात् वेगात् । भूषाविशेषान् विशिष्टानि आभरणानि । अनङ्गागमः कामशास्त्रम् । स्वाधीते सुष्ठु आ समन्तादधीते । रहसि एकान्ते । सायङ्काल एव विटान् आकृष्य, तेभ्यो धनादिकं च स्वीकृत्य, सर्वां निशामपि येन केनचिद् व्याजेन यापयित्वा अकृतार्थान् एव प्रतिप्रेषयन्ति वृद्धगणिका इति भावः । शार्दूलविक्रीडितम् । भूय इति । पुरादिवसदत्तधनं पूर्वदिवसप्रदत्तवित्तम् । निशादौ रात्र्याः प्रथमभागे । विनिद्रा निद्राशून्या, जागरितेत्यर्थः । शनकैः मन्दम् । अव्ययसर्वनाम्नामकच् प्राक्टेः इत्यकच् । वसन्ततिलकवृत्तम् । आरभ्येति । उच्चावचं नानाप्रकारम् । विस्रस्तवेद्यान्तराः विगलितान्यज्ज्ञानाः वेश्यागृहे सुप्तानां दिनरात्र्यादिभेदज्ञानमेव न भवतीति भावः । शार्दूलविक्रीडितम् ।

(पार्श्वतो विलोक्य)

कथमत्रैव नर्मसख्या नवमालिकया कन्दुकक्रीडामनुभवति नवमञ्जरी।

वेगादुत्पतति त्वदास्यकमलास्वादाभिलाषी[1]पत-
त्यग्रे त्वत्पदपल्लवस्य च ततः सन्ताडितः पाणिना।
स्निग्धापाङ्गविलोकनं तव दृढीकर्तुं मुहुर्वेष्टते
कान्ते [2]नूतनमन्तुरेष सुकृती [3]कामीव ते कन्दुकः ॥ ६६ ॥

एषा मामवलोक्य सख्या साकमुत्तिष्ठति । तदहमुपसर्पामि । सखि, नवमञ्जरि, सुखमास्यताम् । दासप्राये मयि कियानुपचारः ? किं ब्रवीषि ? किं वक्तव्यं भावस्य वचनचातुर्यमिति ? अये नवमञ्जरि !

क्लान्तं निसर्गमधुरं [4]मुखपुण्डरीकं
बिम्बाधरः स्फुरति पाटलतां विवृण्वन्।
वक्षोजयुग्ममिदमुल्लसितप्रकम्पं
कस्याधुनैव [5]फलितं सुकृतेन यूनः ? ॥ ६७ ॥

---

१. तपत्यग्रे - ख ; २. नूपुर - ग ; ३. का-व ते कन्तुकः - ख ; ४. नव - क, ख ; ५. कलितं - ग

---

**टिप्पणी** - वेगादिति। नर्मसखी आप्तसखी। कन्दुकक्रीडा कन्दुकखेला। नूतनमन्तुः नवापराधः । आगोऽपराधो मन्तुश्च इत्यमरः । सुकृती धन्यः । उपमालङ्कारः । शार्दूलविक्रीडितम् । सुखमास्यताम् सुखमुपविश्यतम् । दासप्राये सेवकसदृशे । क्लान्तमिति। मुखं पुण्डरीकमिव मुखपुण्डरीकम्। पुण्डरीकं सिताम्भोजम् इत्यमरः। बिम्बसदृशोऽधरः बिम्बाधरः । मध्यमपदलोपी समासः । वक्षोजयोः कुचयोः युग्मं युगलम्। उल्लसितः प्रकम्पः कम्पनं यस्मिंस्तत्। वसन्ततिलकवृत्तम्।

किं ब्रवीषि ? परं तापादिति ?

उत्सङ्गसीम्नि विनिवेश्य [1]धृतं कराभ्या-
मुत्तुङ्गपीनकुचमर्दितबाहुमूलम् ।
व्यापारयन् करतलं जघनोरुमूले
वाञ्छत्यसौ तव रतोत्सवमेव भूयः ।। ६८ ।।

किं ब्रवीषि ? यद्येवं तर्हि धन्या भवति नवमञ्जरीति ? आस्यतामुभाभ्याम् । श्वस्समागमो भविता ।

(इति परिक्रम्यावलोक्य)

कथमत्रैव भवनद्वारे कलवाणी ?

रतिमङ्गविलासतो जयन्ती
रसमाद्यं धुरि चक्षुषा [2]किरन्ती ।
मदनागमसम्प्रदायवेत्त्री[3]
मणिपुत्रीव ममाग्रतो विभाति ।। ६९ ।।

१. दृतं - ख ; २. किरन्ति - क ; ३. वेणी - ग

**टिप्पणी -**

उत्सङ्गसीम्नि - उत्सङ्गप्रदेशे । जघनं स्त्रीकट्याः पुरोभागः । वसन्ततिलकवृत्तम् । रतिमिति । मदनागमः कामशास्त्रम् । वेत्त्री ज्ञात्री । मणिपुत्रीव रत्नपुत्थलिकेव । मालभारिणीति अर्धसमवृत्तम् । ससजाः प्रथमे पदे गुरू चेत् सभरा येन च मालभारिणी स्यात् इति लक्षणात् ।

सखि, अपि कुशलं कलवाण्याः ? हन्त, न [1]विस्मृतं नाम। सखि, किं ब्रवीषि ?

उपगूहनचुम्बनप्रकारै-
रुदयत्कुञ्चितमुद्धतार्भटीकम् ।
मनसा सुरतोत्सवं प्रियं ते
मदनाचार्यकमन्वहं स्मरामि ।। ७० ।। इति ?

करेणाकृष्य द्राक् कनकवलयध्वानमृदुना
निधाय श्रान्तं मां निबिडकुचयोस्सीमनि [a]पुरा।
रहः[a] कर्णे यत् त्वं प्रणयविवशाज्जल्पितवती
सुधासध्रीचीनं स्फुरति तदिदानीं [2]श्रुतमिव ।। ७१ ।।

किं ब्रवीषि ? सखे, मन्दं मन्दं जल्पेति ?

कुवलयनयने विमुच्य चोलं
कुचकलशं स्वयमाकलय्य पश्चात् ।
सरभसमधुना करो मदीयः
श्लथयितुमेष समीहते च नीवीम् ।। ७२ ।।

---

a - a - खपुस्तके नास्ति ; १. विष्कृं - ग ; २. शुतमिव -घ

---

टिप्पणी - उपगूहनेति । उपगूहनम् आलिङ्गनम् । उद्धता आर्भटी यस्मिन् सः उद्धतार्भटीकः, तम् । आचार्यस्य भावः आचार्यकम् । योपधात् गुरूपोत्तमाद् वुञ् । अन्वहं सदा। मालभारिणी। करेणेति। ध्वानः शब्दः । तद्वत् मृदुना। सुधासध्रीचीनम् अमृतसदृशम्। पीयूषममृतं सुधा इत्यमरः । शिखरिणीवृत्तम्। कुवलयेति । चोलः कूर्पासकः । नीवी वस्त्रग्रन्थिः । कुवलये इव नयने यस्याः सा, तत्सम्बुद्धिः कुवलयनयने। श्लथयितुम् मोचयितुम्। पुष्पिताग्रा वृत्तम् नगणयुगरयेण पुष्पिताग्रा नजजरगैर्विदिता जिनव्रतांशैः ।। इति लक्षणात्।

किं ब्रवीषि ? सखे, मन्दं जल्प, [1]जरती श्रोष्यतीति ? [2]तर्हि अन्यतो गच्छामि।

(इत्यग्रतो विलोक्य)

परिहृत्यैव पुरस्तात् प्राक्तनचाम्पेयजालमतिरिक्तम्।
मदनस्य निर्दयहृदो मार्गणरुधिरार्द्रमार्गणौघमिति ॥ ७३ ॥

आसीना मणिपीठमम्बुजदृशः पश्चास्थिता भामिनी
कस्याश्चित्कमनीयकङ्कणझणत्कारं करेणासकृत्।
व्याकीर्णानिलसंसदुत्तरलितस्फायत्कलिन्दात्मजा-
कल्लोलप्रतिमल्लविभ्रमभृतः काचिद् धुनीते कचान् ॥ ७४ ॥

इयं किल मञ्जुवाणी कनीयस्याः कनकलतिकायाः कचभरं बध्नाति।

(सादरमालोक्य)

सान्निध्येन चमत्करोति शनकै[3]र्वक्त्रं विलासश्रियः
श्रुत्युल्लङ्घनकामनापि सफला "चक्षुर्युगस्याधुना"।
कर्तुं चारभते कुचद्वयमुरोमध्येऽपि नीरन्ध्रतां
व्यापारोऽप्यचिरेण तद्रतिपतेर्वर्धिष्णुरस्यास्तनौ ॥ ७५ ॥

---

१. जरटी - ख ; २. तर्हिन्यतो -ख ; a - a खपुस्तके नास्ति।
३. वंश्यं विलासंश्रिया - क, ख

---

**टिप्पणी -** परिहृत्येति। पद्यस्यार्थो न स्पष्टः। गीतिः। आसीनेति। कलिन्दात्मजा कालिन्दी (यमुना) तस्याः कल्लोलाः वीचयः। तेषां प्रतिमल्लः स्पर्धी। तादृशं विभ्रमं विलासं बिभ्रतीति तथोक्ताः। तनौ शरीरे। पद्यद्वयस्यापि शार्दूलविक्रीडितं वृत्तम्।

अपि च,

नीत्वा नम्रमुखीं करेण सचमत्कारं शनैरन्तिकं
शय्यां सम्भ्रमतः कयापि विधया सम्प्रापिताया रहः।
एतस्या हरिणीदृशः पुलकितं स्विंन्नं विमुग्धं मुखं
शृण्वन् सीत्कृतमुन्नमय्य चुबुकं [1]को वा कृती पास्यति ? ।। ७६ ।।

(अन्यतो विलोक्य)

कथमत्रैव चित्ररेखा [2]प्रसाधयन्ती विधुरेखां [a]कनीयसीम[a]न्यदेव परिष्करोति ?

लाक्षामङ्घ्रिरुचा श्रुतौ कुवलये दीप्त्या दृशोर्दीर्घयो-
हारं हासमरीचिभिश्च मकरीपत्राणि गण्डत्विषा।
तानव्या प्रभयैव काञ्चनमयं चेलं च तन्वीमणि-
र्भूषा एव परिष्करोति भुवनव्यामोहकैरङ्गकैः ।। ७७ ।।

---

१. कं वा - ख ; २. प्रसादयन्ती - क, ख ; a .... a - खपुस्तके नास्ति।

---

**टिप्पणी** - नीत्वेति। अन्तिकं समीपम्। कयापि विधया केनापि प्रकारेण। चुबुकं चिबुकम्, अधराधोभागः। विद्वान् सूरिः कृती कृष्टिः इत्यमरः। स्विन्नं स्वेदयुक्तम्। स्विद् धातोः कर्तरि क्तः। रदाभ्यां निष्ठातो नः पूर्वस्य च दः इति नत्वम्। शार्दूलविक्रीडित-वृत्तम्। लाक्षेति। लाक्षा अलक्तकम्। तनोः इयं तानवी, तया तानव्या। चेलं वस्त्रम्। अक्षक्रीडा द्यूतम्। पक्ष्मलयति विस्तारयति। भुवनव्यामोहकैः जगन्मोहनैः। अङ्गकैः अवयवैः। शार्दूलविक्रीडितवृत्तम्।

(परिक्रम्यान्यतोऽवलोक्य)

कैषा कनकवलयखणात्कार[१]तरलितविटहृदया बहिर्वितर्दिकायामक्षक्रीडोत्सुका पक्ष्मलयति ममानन्दम् ।

[२]आरक्ताधरविद्रुमीयसुषमासंक्रान्तशोणीभव-
त्प्रान्तप्रापित[३]हैमपञ्जरगतामाभाषयन्ती शुकीम् ।
सज्जीकर्तुमनुद्यमा [४]श्रुतिपदप्रस्तावतंसं रसा-
दक्षैरक्षतयौवना सकुतुकैरालीजनैः क्रीडति ।। ७८ ।।

अपि च ,

पादौ पल्लवदेशिकौ हृदयभूतूणीरदण्डोद्यमं
जङ्घायुग्ममनङ्गकुञ्जरकरप्रस्पर्धि चोरुद्वयम् ।
मध्यं व्योम महीधरेन्द्रशिखरक्षोदक्षमौ च स्तनौ
विभ्रश्यद्विधुबिम्बडम्बरकलावैदग्ध्यमस्या मुखम् ।। ७९ ।।

(निपुणं निर्वर्ण्य)

कथमियं मयानुभूतपूर्वा [५]मणिमञ्जरी ? [६]तदेनामालापयामि ।

---

१. कदलीत - क , करलित - ख ; २. अयं श्लोकः कपुस्तके न स्पष्टः ; ३. हैम - क, ग ; ४. श्रुतिपर - ख ; ५. मणिमञ्जलौ - क

---

**टिप्पणी -** अक्षक्रीडोत्सुका अक्षद्यूते आसक्ता । पक्ष्मलयति विस्तारयति । आरक्तेति । अक्षतयौवना पूर्णतारुण्या । आलीजनैः सखीजनैः । आलिः सखी वयस्येत्यमरः । हृदयभूः मन्मथः । पादाविति । तूणीरः इषुधिः । तस्य यो दण्डः, तदुद्यमं तत्सदृशमित्यर्थः । कुञ्जरः गजः । करः शुण्डा । महीधरः पर्वतः । विधुः चन्द्रः । डम्बरः विलासः । पद्यद्वयमपि शार्दूलविक्रीडितवृत्ते निबद्धम् ।

(इत्यग्रतो गत्वा)

[1]तिष्ठ तिष्ठ सखि, मणिमञ्जरि, ननु भद्रं भवत्याः ? ।[a] मणिमञ्जरि, किं ब्रवीषि ? विशिष्येदानीं यदिह त्वं मार्गविदसि मम मन्दिरस्य । प्रारम्भ एव खलु पल्लवरागः परां कोटिमारोहति, किं पुनः पल्लवतिलकस्य भवतः इति ? [2]सखि, मा मैवम् । माञ्जिष्ठ एव रागो मम तु भवत्याम् ।

पश्चा[3]त्कण्ठपदस्य हारलतिकां प्रापय्य पर्याकुलां
नासाभूषणमाननेन्दुसचिवं चासज्य गाढं श्रुतौ ।
वल्गत्काञ्चि गलद्दुकूलमुदयत्स्वेदाम्बुनृत्यत्कुचं
यच्चक्रे भवती रतं तदधुनाप्यावर्तते चेतसि ।। ८० ।।

अपि च

निःश्वासोद्गमसूचितश्रमभरं निश्शेषमुक्तत्रपं
[4]नीवीवल्लिपुनर्दृढीकृतनिरुद्योगं विकीर्णालकम् ।
सुप्ता यत्त्वमशेषविभ्रमकलां संकोच्य [5]बाह्वन्तरे
क्रीतस्तेन सखि त्वयायममुना क्रीतं तदैन्द्रं पदम् ।। ८१ ।।

---

a .... a - गपुस्तके नास्ति ; १. तिष्ठति - क ; २. सखे - क ; ३. कण्ठं - ख ; ४. नीवीपल्लि - क ; ५. बाहान्तरे - ख, ग.

---

टिप्पणी - भद्रं मङ्गलम् । मार्गं वेत्तीति मार्गवित् । पल्लवः किसलयं विटश्च । मञ्जिष्ठारागः । मञ्जिष्ठारागो वस्त्रे लग्नः यथा स्थिरोऽवतिष्ठते, तथा त्वयि ममानुरागः स्थिर इति भावः । श्रुतौ श्रवणे । वल्गन्ती काञ्ची यस्मिन् कर्मणि तद्यथाभवति तथा । एवमुत्तरत्रापि क्रियाविशेषणानि । निश्शेषमुक्तत्रपं पूर्णतया त्यक्तलज्जम् । ऐन्द्रम् इन्द्रसम्बन्धि पदं स्थानम् । पद्यद्वयमपि शार्दूलविक्रीडितवृत्ते निबद्धम् ।

सखि, किं ब्रवीषि ? निर्गुणेऽपि [1]गुणारोपो भावस्येति [2]नैसर्गिकम् । (इति ?) सखि, मैवं वद ।

पादौ [3]पद्मभवश्रिया परिणतौ, वक्षोरुहावच्युत-
स्थेमानौ शशिशेखरत्वकलया सर्वातिशाय्याननम् ।
तत्सर्वस्तरुणीजनः परिचितः स्पृष्टश्च तत्त्वं ब्रुवे
त्वय्येतत्स्फुटतामुपैति दयिते मूर्तित्रयाडम्बरम् ।। ८२ ।।

साशं [4]पश्यसि सत्वरं स्पृशसि च स्वच्छन्दमाभाषसे
धत्से स्वे कलपल्लवेऽपि च रसात्त्यक्त्वानुगृह्णास्यपि
यानेवं बहुलीकरोषि बहुधा क्रीडासु तत्त्वं ब्रुवे
मत्तो मत्तगजेन्द्रगामिनि परं धन्यास्तदक्षा इमे ।। ८३ ।।

इदानीमपि,

कराग्रेणोन्मुच्य क्वणितमुखरां हेमरशनां
भुजाभ्यामालिङ्गन् पुलकिततटाभ्यां पृथुकुचौ ।
पिबन्नेवात्यर्घामसकृदपि बिम्बाधरसुधा-
मयं रन्तुं भूयोऽप्ययि [5]सखि भवत्या स्पृहयति ।। ८४ ।।

---

१. गुणारापो - ख ; २. नैसर्गिकः - ख, ग ; ३. पद्मभर - ग; ४. पश्च त्वरं - ख ; ५. सखे - क, प्यसखि - ख

---

**टिप्पणी -** पादाविति । पद्मभवश्रिया । पद्माद् भवा पद्मभवा, सा चासौ श्रीः पद्मभवश्रीः तया इत्येकोऽर्थः । पद्मभवः ब्रह्मा, तस्य श्रिया कान्त्या इत्यन्योऽर्थः । अच्युतः अपतितः, विष्णुः इत्यर्थद्वयम् । शशी चन्द्रः, तस्य शेखरः श्रेष्ठाभरणं तस्य भावः शशिशेखरत्वम् । शशी शेखरः शिरोभूषणं यस्य सः शिवः तद्भावः इति द्वितीयः अर्थः । साशमिति । आशया सहितं यथा तथा साशं शार्दूलविक्रीडितं वृत्तम् । कराग्रेणेति । मुखरां शब्दायमानाम् । हेमरशनां स्वर्णकाञ्चीम् । असकृत् वारं वारम् । अत्यर्घां बहुमूल्याम् । शिखरिणीवृत्तम् ।

किं ब्रवीषि ? यद्येवं कृतार्था भवति मणिमञ्जरीति ? भवतु, श्व आगमिष्यामि ।

(इत्यग्रतो विलोक्य)

कथमत्रैव काञ्चनलता ?

वैदग्ध्येन निवेशितां मणिमयीं वामस्तने वल्लकीं
कुर्वाणा नखसंसदङ्गुलिदलच्छायाभिरापाटलम् ।
चञ्चन्मौक्तिककर्णपत्रसुषमास्निह्यन्मुखेन्दुद्युतिः
स्वेच्छा[१]सक्तकुरङ्गशावकलितोत्सङ्गा कलं गायति ॥ ८५ ॥

सखि [२]काञ्चनलते, [३]परवशितचित्तोऽस्मि गानमाधुर्येण भवत्याः । तथा हि ।

[४]तन्त्र्याः कण्ठपदस्य भेदकलना त्वाकारतो, [५]न ध्वनेः
विच्छेदेषु विशि[५]ष्यते प्रतिकलं सुव्यक्तता स्निग्धता ।
चित्तं द्रावयति क्षणेन सुमुखी तद्गीतिषु स्वादिमा
भूयो न भ्रमराङ्गनासु न पुनः शारीषु, न क्वापि वा ॥ ८६ ॥

अतिमधुरामधरसुधामस्वाद्यानन्दतुन्दिलस्वान्तः ।
आनङ्गकेलिविवशोऽप्याशासे ते कुचद्वये स्वप्तुम् ॥ ८७ ॥

---

१. सप्त - ग ( सुप्त ? ) ; २. कनकलते - ग ; ३. परवशिक -ख ; ४. तन्त्र्यः - क ; ५.....५ - क-खयोः नास्ति ।

---

टिप्पणी - वैदग्ध्येनेति । वल्लकी वीणा । नखसंसत् नखसमूहः । कुरङ्गशावः मृगशिशुः । तेन कलितः युक्तः उत्सङ्गः अङ्को यस्याः सा । कलं मधुरम् । शार्दूलविक्रीडितम् । तन्त्र्या इति । भ्रमराङ्गनासु भ्रमरीषु । शारीषु पक्षिविशेषेषु । शार्दूलविक्रीडितम् । अतिमधुरमिति । आनन्दतुन्दिलस्वान्तः हर्षपूर्णहृदयः । आनङ्गकेलिविवशः कामक्रीडाश्रान्तः । आशासे इच्छामि । आङ्ः शासु इच्छायाम् । गीतिःछन्दः ।

किं ब्रवीषि ? का पुनरेवं प्रसक्ति[१]रपि भवत इति ?[१] सखि, मैवं वद ।

लक्ष्मीस्सा हृदये ममास्ति सततं लावण्यसर्वस्वभूः
भुक्तास्ताः प्रणयातिरेकविवशा भूयः पुरो गोपिकाः ।
[२]राधा साधुवयोविलासचतुरा मय्येव सा रागिणी
[३]संघट्यां तदपीह काञ्चनलते सक्तस्तवायं जनः ॥ ८८ ॥

किं ब्रवीषि ? साधु सखे साधु ।

[४]ज्ञातं हा ननु कृष्ण एव स भवान्[४] स्वेच्छाविहारी रसात्
का त्वामप्यनुशासितुं च भुवने कामातुरं तत्परम्[५] ।
संघट्यामिति ते गिरैव फलितं सम्यक् सुधातुंल्यया
भूयस्सम्प्रति जन्मकोटिषु कृतैः पुण्यैरगण्यैर्मम ॥ ८९ ॥ इति ?

भवतु । भवत्या हृदय एव तिष्ठामि ।

(इत्यन्यतो गत्वा उच्चैराकर्ण्य)

---

१....१ क-खयोर्नास्ति ; २. धारा - ख ; ३. संघाट्याम् - ग ; ४ ....... ४ - खपुस्तके नास्ति । २. कामातुरस्सत्वरं - ख, कामातुरस्तत्परम् - ग

---

**टिप्पणी** - लक्ष्मीरिति । अत्र नायकः स्वात्मनि विष्णवभेदं समारोप्य ब्रवीति । संघट्याम् इतिपदस्य तात्पर्यं नावबुध्यते । सङ्गत्यामित्यर्थः स्यात् । शार्दूलविक्रीडितम् । ज्ञातमिति । रसात् आसक्त्या । सुधातुल्यया अमृतसदृश्या । कृष्णवत् बहुषु नारीषु निहितानुरागस्य भवतः मद्विषये अनुरागसूचनं प्राक्तनबहुपुण्यफलमिति नायिकाया भावः । शार्दूलविक्रीडितम् ।

काञ्चीकिङ्किणिजः करोति च धनुर्ज्यावल्लरीटङ्कृतिं
निस्साणध्वनिमङ्गजस्य हि तुलाकोटीरवः पादयोः ।
शङ्खध्वानचमत्कृतिं च मणितव्यापारपारम्परी
हस्तास्फालनसम्भ्रमोऽपि सुदृशामाख्याति चायोधनम् ।। १० ।।

कथमद्यापि न विरामः कामाहवस्य ?

(परिक्रम्य, पञ्चषपदानि गत्वा, [१]पार्श्वतो विलोक्य)

सत्रासं चुबुकाञ्चलेन विधृतं संकोच्य [२]गण्डस्थलीं
[३]कुर्वन्त्यग्रपटं कुसुम्भरुचिरं बिम्बाधरीयत्त्विषा ।
[४]पर्यायोद्धृतबाहुमूलरुचिभिः पश्यन्मनोहारिणी
काचिन्मुञ्चति कर्कशातपपरि[५]क्लान्ता शनैःकञ्चुलीम् ।। ११ ।।

(सहर्षम्)

आलोकस्त्वमरावतीपरिवृढ[६]स्थाने[६]सुखासीनता
वृत्तिर्विष्टर एव विष्टपविभोः वाङ्मिश्रणं जात्वपि ।
प्रत्यङ्गं परिरम्भणं च परमस्थानागमं शार्ङ्गिणः
कैवल्या[७]नुभवः[७] कदापि सुरतं चास्याश्चकोरीदृशः ।। १२ ।।

---

१. सर्वतो - ख ; २. कण्ठ - क, ख, घ ; ३. कुर्वन्त्यपतिं - क ; ४. पर्यायोद्यत - ख, ग, घ ; ५. श्रान्ता - क, क्रान्ता - ख ; ६ ... ६ - नास्ति - ख ; ७ ... ७ - नास्ति - ख

---

**टिप्पणी** - काञ्चीति । काञ्ची मेखला । किङ्किणी क्षुद्रघण्टिका । ज्यावल्लरी मौर्वी । तुलाकोटी नूपुरम् । रवः शब्दः । परम्परा एव पारम्परी । आयोधनं युद्धम् । पञ्च वा षड् वा पञ्चषाणि, तानि च पदानि च पञ्चषपदानि । कञ्चुलीं चोलम् । आलोक इति । आलोकः दर्शनम् । अमरावतीपरिवृढः स्वर्गस्य स्वामी इन्द्रः । विष्टरः आसनम् । विष्टपविभुः लोकप्रभुः । विष्टपं भुवनं जगत् इत्यमरः । परिरम्भणम् आलिङ्गनम् । शार्ङ्गिणः विष्णोः । त्रीणि पद्यानि शार्दूलविक्रीडितवृत्ते निबद्धानि ।

(निपुणं निर्वर्ण्य)

अहो ! कथमत्रैव कर्पूरमञ्जरी ? शरीरिणी चन्द्रिकेव दूरादालोकमात्रेणैवाह्लादयसि मामकीनमन्तःकरणम् । कर्पूरमञ्जरि, किं ब्रवीषि ? सखे वावदूकोऽसि मृषावादेष्विति ? [1]सखि, मैवं वद, सत्यवाद एव।

न स्वां पञ्चशरीं न वा [2]मधुकरीसज्ज्वं स्वकीयं धनुः
न स्फारं शशिमण्डलं न च मधुं नो वा सुगन्धानिलम्।
जेता किन्तु स [3]एव शम्बररिपुः साकूतविष्फारित-
प्रौढापाङ्गविलासविभ्रमधुरां विश्वस्य विश्वस्य ते ॥ ९३ ॥

किं ब्रवीषि ? अयि कितव, तर्हि तथाविधामेव प्रेयसीं पुनरनुसर। किमस्त्यत्रापीति ?

(सामर्षम् )

सखि, करुणाविषयेऽपि मयि किं कोपाविष्करणेन ?

---

१. सखे, - क, ख, ग, घ ; २. मधुकरीं- क, ख, घ ३. एष -ग ;

---

**टिप्पणी** - निर्वर्ण्य दृष्ट्वा । मामकीनं मदीयम् । वावदूकः अतिवक्ता । वाग्मीति यावत् । मृषावादः मिथ्यकथनम् । पञ्चानां शराणां समाहारः पञ्चशरी । मधुकरीभिः भ्रमरीभिः सज्जं सज्जीकृतं स्वकीयं स्वीयं धनुः चापम् । स्फारं भूयश्च भूरि च । मधुं वसन्तम् । शम्बररिपुः मन्मथः । विभ्रमस्य धूः विभ्रमधुरा, ताम् । ऋक्पूरब्धूःपथामानक्षे । शार्दूलविक्रीडितम् । प्रेयसी प्रियतरा स्त्री । ताम् । रशनालतां काञ्चीविल्लरीम् । सामर्षं सरोषम् ।

कोपश्चेद् यदि ते कुरङ्गनयने मय्यग्र एवास्त्यसौ
प्रायश्चित्तविपाकतो परिणतं यद्यच्च तत्तच्चर।
बाहुभ्यां च [1](ब)धान वा रदपटीमासाद्य वा खण्डय
छित्वा वा रशना[2]लतां मणिमयीं गाढं तया ताडय॥ १४॥

कर्पूरमञ्जरि, किं ब्रवीषि ? सखे, पात्रमेव भवान् एतावतोऽपि दण्डस्य, तदपि न ते परिभवः। तथाहि

[a]कोपेनारुणिताञ्चलेन नयनेनालोकनेनाथ वा
बाढं बन्धनखण्डनप्रहरणैः श्रान्तिर्न पादानते।
प्रायश्चित्त[3]विवेकमेव भवति प्रत्यञ्चयेत् [4]कञ्च सा
राधापादसरोज[5]रोहणकृते मौलिस्थले रञ्जितः॥ १५॥ इति ?

भवतु। पात्रीभवेयमचिरेण भवत्याः प्रसदनस्य।

(इति वीथीमुखमुपसृत्य श्रुतिमभिनीय)

---

२. पिधान - क, ख, घ विधान (ग) ; २. लतामणिमयीं -घ ; a. अस्य श्लोकस्यार्थो न स्पष्टः। ३. विपाकमेव - ग ; ४. कञ्च वा - घ ; ५. रोहर्पण - घ

---

टिप्पणी - कोप इति। प्रायश्चित्तविपाकतः प्रायश्चित्तपरिणामत्वेन। बधान बन्धनं कुरु। बध् धातोः लोटि मध्यमपुरुषैकवचनम्। शार्दूलविक्रीडितम्। कोपेनेति। अरुणिताञ्चलेन रक्तान्तभागेन। भृशप्रतिज्ञयोर्बाढम्। प्रसदनस्य प्रसन्नतायाः। शार्दूलविक्रीडितम्।

आशाचक्रमनर्गलं मुखरयन्नाकाशमावर्तयन्
उद्घुष्यन् घटिकास्स्फुटं जनिमतीरुत्साहभूम्ना नृणाम् ।
देवस्येन्दुकला[१]धरस्य[१] पुरतः प्रौढोत्सवप्रापको
मन्दं मन्थर एष डिण्डिमरवो माध्याह्निकः श्रूयते ।। ९६ ।।

(पदान्तरं गत्वा, ऊर्ध्वमवलोक्य)

दर्शं दर्शमशेषमेव तिमिरं हर्तुं शनैः स्वैः करैः
भास्वानेष सरोजबन्धुरधुना व्योमाग्रमारोहति ।
तत्सर्वं तरसा तनूभवदुरुच्छायाचयच्छद्मना
पुञ्जीभूय [२]भयादिव क्षितिरुहां पादान्तरे लीयते ।। ९७ ।।

(कतिचित् पदानि गत्वा)

पश्चाद् गत्वैव दूरं पुनरपि च समाढौकमानौ शिरोभ्यां
अन्योन्याघातवेगस्थपुटितपललच्छेदसङ्कीर्णपाश्वौं ।[३]
[४]शृङ्गाग्रालोलकालायसफलकखणात्कारसंपूरिताशौ
आरब्धायोधनौ द्वौ विनमितवदनावत्र मेषौ सरोषौ ।। ९८ ।।

---

१ ... १ - नास्ति - क ; १. भूय यादिव - क ; २. पाशौ - ग ; ३. शृङ्गाग्रालोक -क, ख, घ

---

**टिप्पणी -** आशाचक्रमिति । आशाचक्रं दिङ्मण्डलम् । मध्याह्नेभवः माध्याह्निकः । डिण्डिमो वाद्यविशेषः । शार्दूलविक्रीडितम् । दर्शं दर्शमिति । दर्शं दर्शं दृष्ट्वा दृष्ट्वा । तिमिरम् अन्धकारम् । भास्वान् सूर्यः । व्योम आकाशम् । तरसा वेगेन । तरसी बलरंहसी इत्यमरः । क्षितिरुहां वृक्षाणाम् । शार्दूलविक्रीडितम् । पश्चादिति । समाढौकमानौ समागच्छन्तौ । ढौकृ गतौ । श्रृङ्गाग्रे आलोलं यत् कालायसफलकं, तस्य खणात्कारेण सम्पूरिताः आशाः दिशः याभ्यां तौ तथोक्तौ । आरब्धायोधनौ प्रारब्धकलहौ । स्रग्धरा । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् इति लक्षणात् ।

(अन्यतो विलोक्य)

पुरः [1]क्षिप्त्वा सव्यं चरणमभितो न्यञ्चिततनू
[2]प्रहर्तुं पश्यन्तौ प्रसभमवकाशं च शिरसोः ।
मदोन्मुक्तक्ष्वेलामुखरहरितौ मांसलभुजौ
नियुद्धे सस्पर्धौ निभृतमिह मल्लौ विचरतः ।। ९९ ।।

(श्रवणमभिनीय ऊर्ध्वमवलोक्य)

आरूढा गुणवर्त्मना विगतभीरायामिवेणीशिखां
तिष्ठन्त्यञ्चलसीम्नि [3]भस्म सहसा पादौ प्रसार्यादरात् ।
बिभ्राणा शिरसा क्रमेण युगपद् गाढं घटान् पञ्चषान्
मुग्धा काचन नृत्यतीह तरुणी मूर्ता नभःश्रीरिव ।। १०० ।।

[4]प्रत्यग्रे वर्तते नयनोत्सवः[4]

(पार्श्वतो विलोक्य)

मणिबन्धसीम्नि मणिकङ्कणं दधत् करशोभिचित्ररुचिबर्हिपिञ्छकः ।
भसितावलेपभृशपाण्डुवर्ष्मभागयमेति तूर्णतरमैन्द्रजालिकः ।। १०१ ।।

---

१. क्षिप्त- क, क्षिप्ता - ख, क्षिप्तौ - ग ; २. प्रकहर्तुं - क ; ३. सत्यसहसा - ख ; ४ ..... ४ - कपुस्तके न वर्तते

---

**टिप्पणी** - [1]पुर इति । क्ष्वेला सिंहनादः । क्ष्वेडा तु सिंहनादः स्यात् इत्यमरः । लडयोरभेदः । प्रसभं बलात्कारेण । मांसलभुजौ बलयुक्तबाहुकौ । नियुद्धं बाहुयुद्धम् । शिखरिणीवृत्तम् । आरूढेति । गुणवर्त्मना रज्जुमार्गेण । बिभ्राणा वहन्ती । मूर्ता विग्रहवती । नभःश्रीरिव आकाशलक्ष्मीरिव । शार्दूलविक्रीडितम् । मणीति । मयूरो बर्हिणो बर्हीं, शिखण्डस्तु पिञ्छबर्हे नपुंसके इति चामरः । मञ्जुभाषिण्यपराख्यं नन्दिनीनामकं वृत्तम् । सजसा जगाविति जयाथ नन्दिनी इति लक्षणात् ।

तदमुना सहैव शशिप्रभामन्दिरद्वारे सत्वरमैन्द्रजालविद्याकौतुक-मनुभवामि।

(इति शशिप्रभामन्दिरद्वारोपसर्पणं नाटयित्वा ''सर्वे समुपतिष्ठन्ति'' इति सविस्मयमाकर्ण्य कोलाहलम्)

चरन्तु धरणीधरा भुवि चरन्तु भूमीरुहा
[1]वहन्तु मरुतः क्वचिद्वहतु शीतलत्वं शिखी।
उदेतु च महीतलेऽप्युडुपमण्डली भूयसी
स्फुटीभवतु सर्वतो [2]घटकिनीशतं व्योमनि ॥ १०२ ॥

नृत्यत्वप्सरसां कुलं[3]नवनवप्रादुर्भवद्यौवनं[3]
वल्गत्वत्र मरालसंसदमला व्योमापगास्रोतसि।
दिक्पालैस्सह धीरदुन्दुभिरवव्याप्ताशमभ्रस्थला-
[4]दारुह्याभ्रमुवल्लभं च भगवानभ्येतु चाखण्डलः ॥ १०३ ॥

---

१. वसन्तु - ग, घ ; २. पुटकिनी - ग ; ३ ..... ३ - क -खयोः नास्ति। ४. आरुह्या ... घ

---

**टिप्पणी** - चरन्त्विति। धरणीधराः पर्वताः। भूमीरुहाः वृक्षाः। शिखी वह्निः। उडुपमण्डली चन्द्रसमूहः। अथवा उडुपानां जलप्लवानां समूहः। उडूनि नक्षत्राणि पातीत्युडुपः चन्द्रः। उडुपं तु प्लवः कोलः इत्यमरः। जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः इति लक्षणात् पृथ्वीवृत्तम्। नृत्यत्विति। मरालाः हंसाः। व्योमापगास्रोतसि आकाशगङ्गाप्रवाहे। व्याप्ताशं व्याप्तदिशम्। अभ्रमुवल्लभः ऐरावतः। आखण्डलः इन्द्रः। शार्दूलविक्रीडितम्।

अपि च -

[1]उदञ्चतु दलद्वयी सरसमुक्तबीजोदराद्
दलैररुणपेशलैस्सुरभिलैः प्रसूनैरपि ।
सुमं समसुगन्धितासकललोभनीयैः पुनः
फलैरपि सहस्रधा परिणमद्भिरस्मिन् क्षणे ।। १०४ ।।

तथैव जातु सर्वे सविस्मयमासते । अदृष्टचरमश्रुतचरं कौशलमैन्द्रजालिकस्य। भवतु । अन्यतो गच्छामि ।

(इत्यग्रतो विलोक्य)

कोऽयमिदानीमत्र कलकलस्स[2](सं)रम्भः अनतिचिरप्रवर्तमानं कमप्युत्सवमाविष्करोति ।

तथा हि -

लोलच्चित्रदुकूलवल्लिघटित[3]स्फायद्वितानाश्रया
बद्धाः सम्प्रति भान्ति हेमकदलीस्तम्भाः बहिः प्राङ्गणे ।
[4]वल्गत्पौरविलासिनीजनमणीमञ्जीरशिञ्जारवैः
साकं मङ्गलतूर्यघोषविततिर्व्याप्नोति सर्वां दिशम् ।। १०५ ।।

---

१. इदं पद्यं क-खयोः भागशो लुप्तम् ; २. सारम्भः - क, सौरम्भः - ख, ग ; ३. स्फायद्वितानश्रिया - घ ; ४. वल्लद्वारविलासिनी - ख, वल्गद्वारविलासिनी - ग ;

---

टिप्पणी - उदञ्चत्विति । उदञ्चतु उद्गच्छतु । पृथ्वीवृत्तम् । अदृष्टचरम् अदृष्टपूर्वम् । भूतपूर्वे चरट् । लोलदिति । लोलन्ति चित्राणि च यानि दुकूलानि कौशेयवस्त्राणि, तान्येव वल्लयः, ताभिः घटितं, स्फायद् वर्धमानं च यद्वितानं, तस्याश्रयाः आधारभूताः । हेमकदली कदलीविशेषः । तद्रचिताः स्तम्भाः । मञ्जीरः नूपुरः । शिञ्जारवः भूषणशब्दः । तूर्याणि वाद्यानि । विततिः समूहः । शार्दूलविक्रीडितम् ।

जगज्जयतु मन्मथश्चरतु तत्सहायश्शशी
मरुल्लसतु दक्षिणो मधुरवेलमानन्दतु।
सुखीभवतु कामिनां समुदयोऽपि [1]सुभ्रूरतैः
प्रसज्य च पुनः पुनः फलतु तत्तदुत्कण्ठितम्।। १०६ ।।

(इत्याशिषोऽप्याकर्ण्य)

अयि नूपुरक, कथमिदानीं कुमुद्वती निजदारिकाया मन्दारिकायाः प्रथमर्तूत्सवं कारयति ? तदहमपि अन्तः प्रविश्य [2]पश्यामि।[2]

(प्रवेशं नाटयित्वा। सर्वे ससम्भ्रममुत्तिष्ठन्ति)

कुमुद्वति, तिष्ठ तिष्ठ । किं ब्रवीषि ? भाव, सम्प्रत्यनाकारितोऽप्यलङ्कृतवानसि अस्मद्भवनम् । तदहं मन्ये पल्लवितं मम भागधेयेनेति । सखि, किमुच्यते माम् । अनाहूतोऽध्वरं गच्छेदानन्दमतिमङ्गलम् इति मुखरः खलु प्रवादः।

कुमुद्वति, किं ब्रवीषि ? सखे साधु साध्विति ?

---

१. सुभारतैः - ख, सुभ्यारतैः - घ ; २ ...... २ - कपुस्तके नास्ति।

---

**टिप्पणी** - जगदिति । मधुः वसन्तः । अवेलं निर्मर्यादम् । सुभ्रूरतैः सुन्दरीसुरतैः । उत्कण्ठितम् उत्कण्ठा । भावे क्तः । पृथ्वीवृत्तम् । निजदारिकायाः स्वपुत्र्याः । प्रथमर्तूत्सवं प्रथमरजोदर्शननिमित्तमुत्सवम् । अनाकारितोऽपि अनाहूतोऽपि । हूतिराकारणाह्वानम् इत्यमरः । अध्वरः यज्ञः । प्रवादः लोकवार्ता । मुखरः प्रसिद्धः ।

[1]माल्यं चम्पकतैलमुज्ज्वलतरं गन्धं च गन्धद्रवं
सुश्लाघ्यं पटवासकं च परितः सेकं कुसुम्भोदकैः।
वीटीं सौरभशालिनीमपि करे दत्त्वा स्तुवन्त्युत्सुका-
स्तन्वानास्तदनङ्गमङ्गलकृते तंत्रोपचारान् बहून् [1]।। १०७ ।।

[2]कथमत्रैव[2] काञ्चनलतासखी कादम्बरी ? किं ब्रवीषि ? सखे, पल्लवशेखर, तव प्रेयस्या काञ्चनलतया सम्प्रेषितभवत्कुशला तत्रभवन्तमनुवर्तते इति ?

(सानुस्मरणम्)

षष्ट्युत्तरान् त्रिंशतिकान् वराहान् मुक्तामयीमुत्तमकण्ठभूषाम्।
दत्त्वार्धवर्षं कर [3]वाणि नित्यं[3] रतोत्सवं पल्लवशेखरस्ते ।। १०८ ।।

अब्दे तारणनाम्नि मासि च मधोराद्ये दिने वासरे
शीतांशोर्वितरामि काञ्चनलताहस्ते स्वयं वीटिकाम्।
सान्यं दृष्टवती [4]कदाचन मनाङ्गध्ये तदेतत्स्वयं
दत्त्वैवं द्विगुणं कलत्रतु पुनर्वर्षद्वयं चापि मे ।। १०९ ।।

(इति कादम्बर्या हस्ते [5]वीटिकां काञ्चनलतायै प्रेषयति)

---

१ ..... १ - खपुस्तके नास्ति। २ ..... २ - त्रुटितोऽयं भागः - क
३ .. ३ - क-ख पुस्तकयोर्नास्ति। ४. तदा च न - घ ; ५. वीटी - घ

---

**टिप्पणी** - माल्यमिति। माल्यं पुष्पमाला। माल्यं मालास्रजौ इत्यमरः। पटवासकः पिष्टातः। कुसुम्भं पुष्पविशेषः। तेन वासितैरुदकैः कुसुम्भोदकैः। स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि इत्यमरः। वीटीं ताम्बूलम्। शार्दूलविक्रीडितम्। षष्टीति। वराहाः वराहमुद्राङ्किताः निष्काः। मुक्तमयीं मौक्तिकरचितां, कण्ठभूषां कण्ठहारम्। करवाणि करवै। उपजतिवृत्तम्। अब्द इति। अब्दे वर्षे। मधोः मासि चैत्रमासे। स्याच्चैत्रो चैत्रिको मधुः इत्यमरः। शीतांशोः वासरे सोमवारे। कलत्रतु कलत्रवदाचरतु। वीटिकां ताम्बूलम्। मनाक् स्वल्पमपि। शार्दूलविक्रीडितम्।

नूपुरक, किं ब्रवीषि ? सम्यगाचरितं वाराङ्गनावैदग्ध्यसर्वस्वविदा तत्र भवतेति ? (सोच्छ्वासं)

रहस्सद्यस्स्विद्य[1]न्निभृतपुलकोज्जृम्भिकठिन-
स्तनाभोगामर्दप्रणयविवशायाः प्रतिपदम् ।
कदा वा कल्याण्याः क्वचन सुरतोत्साहमुदितो
विजह्यां कामोत्थां[2]विसदृशमवस्थां पुंनरिमाम् ।। ११० ।।

अथवा -

सा सुन्दरीधुरि कदा नु सरन्मृगाङ्क-
सम्पद्विडम्बनविमुग्धमुखाम्बुजश्रीः ।
दृश्येत वा पुनरितस्तत एव भग्न-
दोर्दण्डदर्पविभवो मदनो मयि स्यात् ।। १११ ।।

नूपुरक, किं ब्रवीषि ? सखे पल्लवशेखर, भवतु । अनतिदूरवति क्रीडावने क्वचिदेव पक्ष्मलतरुच्छायायां प्रगल्भातपप्रसक्तश्रान्ति-भरमावर्जयाव इति ? भवतु तथा।

अहो ! कथमत्रैव विचित्रतरतरुणतमालपनसरसाल [3]कुरुविन्द-

---

१. न्निबिड - ग ; २. विसदृशमुपस्था - क, ख ; ३. कुन्द - ग ;

---

**टिप्पणी** - रह इति । वारोङ्गना वेश्या । रहः एकान्ते । पुलकः रोमाञ्चः । स्तनाभोगः कुचयोः परिपूर्णो विस्तारः । आभोगः परिपूर्णता इत्यमरः । आमर्दः मर्दनम् । विजह्यां त्यजेयम् । शिखरिणीवृत्तम् । सेति । सुन्दरीधुरि सुन्दरस्त्रीणां समूहे । दोर्दण्डः बाहुदण्डः । विभवो वैभवः । मदनो मन्मथः । मन्मथबाहुबलं मद्विषये कुण्ठितं भवति, यदि चेत् सा सुन्दरी मम समीपे स्यादिति तात्पर्यम् । वसन्ततिलकवृत्तम् । पक्ष्मलतरुच्छायायां सान्द्रवृक्षच्छायायाम् । प्रगल्भः प्रखरः । श्रान्तिभरं श्रमाधिक्यम् ।

मन्दारमुखनिखिलानोकहशाखाशिखाप्रवाल[1]विहरमाणशुकपिक-कुलकलकलारवसंघुष्यमाण[1]मदनमहाराजभुजापदानमेदुरम्, दुरन्तमधुमदावष्टम्भसम्भारसम्भ्रमोपधायिभूयस्तरमञ्जरीपुञ्जगुञ्जन्मि-लिन्दकञ्जनयनावलनगलदनर्गलकुसुमरससारिणीकुल्यानिपात-नितान्तमधुरसलिलबालपादपालवाल[2]शत[2]संयुतम्, लतान्त[2a]-कलम्बकागमनसूचक[3]काहलारवायमाणमेचकगरुच्छाय(क्रें) काररवाकर्णनविह्वलविविधपथिकजनपर्यस्तमनःप्रियालाभसम्भ्र-मविषण्णविदग्धचेटिका[4]जनं मनोभवसभान्तरसम्प्रेषितकुङ्कुम-कणविलेपनारुणजयचीटिका[4]पटलपाटलिततरुणकिसलय[4]सँल्लपत्पतङ्ग-निर्वर्णनोदीर्णविरहिसमुदयवैवर्ण्यवर्णनासहतत्तत्परिचारकपरिवेष्टितं, क्वचिदष्टापद[5]कुम्भमिव [6]समुन्नमितकेतकीकदम्बम् क्वचिद्वि-कोशमदनासिमण्डलमिव समुल्लसितरसालकिसलयम्, क्वचिदु-दूढमदनातपत्रमिव विनिद्रशतपत्रम्, क्वचिदुज्ज्वलितस्मरप्रताप-मिव दरदलितचम्पककुसुमम्, क्वचिदुद्धूयमानमनोभवचामरमिव तरुणानिलकम्पमानमञ्जरीसमुदायम्, क्वचिद् दर्पकाकृष्ट[7]कर्ण[7]-

---

१ ...... १- अयं भागः नास्ति - क, ख, घ ; २. ...... २ - क, ख, ग - पुस्तकेषु नास्ति ; २a- कदम्बं - ग ; ३. कहला - ग, घं ; ४.... ४ - अयं भागः क, ख, घ ; ५. कुन्तमिव - घ ; ६. समुत्तम्भित - ख , ग ; ७... ७ - गपुस्तके नास्ति ;

---

**टिप्पणी** - अनोकहाः वृक्षाः । कलकलरवः कोलाहलशब्दः । सान्द्रस्निग्धस्तु मेदुरः । अवष्टम्भः आलम्बनम् । मिलिन्दकञ्जनयना भ्रमरी । कुल्याल्पा कृत्रिमा सरित् इत्यमरः । बालपादपाः वृक्षकाः । आलवालम् आवालम् । लतान्तकलम्बकः पुष्पसायकः मन्मथः । अष्टापदं सुवर्णम् । कदम्बं समुदायः ।

कुण्डलितचापमिव [२]वक्रि[२]ताशोकम्, क्वचिदुत्तरलकन्दर्पजय-पताकमिव अर्धोपरूढकुरवकम्, क्वचित् कुसुमायुधपटकुटी-कनककलशमिव परिणत[३]मातुलुङ्गम्, क्वचिदुपार्जितानङ्गा-निलयन्त्रकर्बुर[४]घटकमिव परिपक्कलिकुचफलसमुदायम्, क्वचित् पुष्पायुध[६]जयशङ्खमिव मञ्जुलतर[६]मल्लिकामुकुलं, क्वचिदास्तीर्य[७]माणपल्लवतल्पम्, क्वचिन्निर्मीयमाणबिसाङ्कुरा-कल्पम्, क्वचित्कल्प्यमानकुसुमपरागशयनीयम्, क्वचिद् युवति-पदताड्यमानकङ्केलितरुवृन्दम्, क्वचिच्चतुर[८]तरुणीपरिरभ्यमाण-कुरवकानोकहम्, क्वचिद् विदग्ध [९]वधूनिष्ठीव्यमान[९][१०]सीधुजल-पूरितवकुलनिकरम्, अखिलगुणानवद्यमुद्यानम्।

(सौरभाघ्राणमभिनीय)

मनाङ् मलयभूधरादुदयमेत्य संवर्धितैः
क्रमेण पथि मारुतैरुपवनीनवीथीकृतैः।
इतः समुपचोदिता दरविनिद्रमल्लीरजः-
परीमलपरम्परी प्रमदयत्यशेषं [१०]जगत्॥ ११२॥

---

२ ...... २ - क-खयोः लुप्तम्। ३. मातुलिङ्गम् - ख; ४. घुटिकमिव - ग; ५. परिपक्ककुच - ख; ६. नास्ति - क, ख; ७.तार्यमाण - घ; ८. तरुणीजन -ग; ९ .... ९ - अयं भागः क-खयोर्नास्ति। १०. जगत् इति पदं लुप्तं कखयोः।

---

**टिप्पणी** - विकोशः कोशाद् बहिर्निस्सारितः। मदनासिः मन्मथस्य खड्गः। उदूढम् उन्नमितम् आतपत्रं छत्रम्। शतपत्रं कुशेशयम्। दर्पकः मन्मथः।.कन्दर्पो दर्पकोऽनङ्गः इत्यमरः। सीधुजलं मद्यम्। कुरवकवकुलादितरवः तरुणीपरिरम्भ - सीधुजलादिना पुष्प्यन्ति इति कविसमयः। उपवनस्येदम् उपवनीनम्। दरविनिद्रं स्वल्पविकसितम्। परीमलः परिमलः। उपसर्गस्य घञ्यमनुष्ये बहुलम् इति वैकल्पिको दीर्घः। परम्परी परम्परा। परम्परेत्येव पाठः श्रेयान्। पृथ्वीवृत्तम्।

[1](विलोक्य)

अहो ! अम्भोविहाराय निर्गतानां रमणीयता रमणीनाम् ।

घर्माभःकणदूषितार्धतिलकाः[2] प्रम्लानकर्णोत्पलाः
निःश्वासोद्गमनिर्दलत्कुचयुगापर्याप्तकूर्पासकाः ।
विन्यासं पदयोः कथञ्चिदपि च क्षन्तुं क्षितावक्षमा
मन्दं मन्दिरदेशतस्सकुतुकं [3]मङ्क्तुं व्रजन्त्यङ्गनाः[3] ॥ ११३ ॥

अहो पञ्चषैरेव पादविन्यासैरुपवनवकुलतरु[4]च्छायामुपागतावावाम् ।

(शिशिरस्पर्श [5]सुखानुभवं नाटयित्वा)

अहो ! कमनीयता दिनोपरिभागस्य । तथा हि –

चेतांसीह समुन्मिषन्ति शनकैः केलीसरोगाहने
वाताः पाटलसन्नियोगसुलभा मन्दं वलन्तेतराम् ।
छायाश्चापि महीरुहां सुलभतः सम्प्राप्त[6]निद्रारसाः
पूर्वस्मात्परिणाम एव दिवसा भूयस्सुखारम्भकाः ॥ ११४ ॥

(सुखमभिनीय)[7]

---

१. सर्वतो विलोक्य – ख ; २. तिलकः – ख, घ ; ३ .... ३ – खपुस्तके नास्ति ; ४. छायायामुपा – घ ; ५. सुखाभावं – ख ; ६. निद्रासहाः – ख ; ७. श्रुतिमभिनीय –क

---

**टिप्पणी** – घर्माम्भ इति । घर्माम्भः स्वेदः । कूर्पासकः चोलः । मङ्क्तुं मज्जनं कर्तुम् । निदाघप्रभावात् स्वेदयुक्ताः, निश्वसन्त्यः, तत्कारणात् वर्धमानस्तनयुगधारणापर्याप्तकूर्पासकाः, अतीवत्वरित-पदगतयः स्त्रियः मज्जनसुखमनुभवितुं गच्छन्तीति कविः वर्णयति । शार्दूलविक्रीडितम् । दिनोपरिभागस्य अपराह्णस्य । चेतांसीति । शनकैः मन्दम् । सन्नियोगः सम्बन्धः । महीरुहां वृक्षाणाम् । निद्राया रसः निद्रारसः । सम्प्राप्तो निद्रारसो येषु ते ।शार्दूलविक्रीडितम् ।

पर्यङ्कीपटलैस्समं पथि पथि स्वानीयमानैरति-
प्रस्निग्धश्चतुरङ्गयानिचयो रेखात्मना लक्ष्यते।
हेषाभिः खुरघट्टनैश्च हरितां सम्भिद्यते रोदसी
पूर्यन्ते च पुनः पुनर्गजघटाघण्टानिनादैर्दिशः ॥ ११५ ॥

कोऽयं [१]कोलाहलो निरङ्कुशतया समाक्रामति [२]दिक्चक्रम् ? नूपुरक, किं ब्रवीषि ?

(निपुणमवलोक्य)

[३]अर्धपथ एवाकर्णितं मयाद्य चतुर्दशीगौरीमहोत्सवाकलनाय [४]चण्डिकालयं प्रति महीशूरनगरात् प्रस्थातुकामाः सपौराङ्गनाः राजस्त्रियः। तदधुना [५]तत्सहभाविनः सैन्यस्य सम्मर्देन भवितव्यम् (इति ?) (सहर्षम्) तर्हि मम प्रिया चम्पकलताप्यागत्य वर्तते। नूपुरक, किं ब्रवीषि ?

[६]न केवलं चम्पकलतिका, अपि तु लवङ्गिकापीति ? तर्हि फलिष्यति तत्रैव आवयोर्भागधेयम्। सखे, नूपुरक, किं ब्रवीषि ?[६]

---

१. कोलाहलतया - ख, घ ; २. दिक्क्षत्रम् - क ; ३. अर्धपद - क, ख ; ४. चण्डिकातैलं - क, चण्डिकाशैलं - ख ; ५. भाविनो - ख ; ६ .... ६ - अयं भागः कपुस्तके घपुस्तके च नास्ति।

---

टिप्पणी - हेषाभिरिति। हेषाभिः अश्वकण्ठध्वनिभिः। खुरः शफम्। अश्वानां हेषा ह्रेषा च निस्वनः इत्यमरः। रोदसी द्यौः पृथिवी वा। द्यावापृथिव्यौ रोदस्यौ इत्यमरः। घटा वृन्दम्। शार्दूलविक्रीडितम्। निरङ्कुशतया निरर्गलतया। अर्धं पथः अर्धपथः। अर्धं नपुंसकम् इति सूत्रेण समासः। ऋक्पूरब्धूःपथामानक्षे इति सूत्रेण समासस्या- [illegible]

तथैवास्तु । निष्क्रम्यताम् इति ? सखे, नूपुरक, पश्य ।

नभःस्थलकषोपलोल्लिखितभर्मकूटोच्चयः
पुरो नयनगोचरो भवति भूभृदायामवान् ।
सकृत्प्रणमतः करे विदधती त्रिलोकश्रियं
यदग्रगृहवासिनी विजयते जगन्मङ्गला ॥ ११६ ॥

किञ्च -

दुरासदमनर्जकैर्दुहितुरद्य भूभृन्मणेः
पुरः स्फुरति पूर्णिमाविधुसुसुन्दरं मन्दिरम् ।
तदेतदभितो विभात्यनुपमानशाखाशिखा-
ललत्कुसुममञ्जरीविहृतिभृत्पिका झम्पिका ॥ ११७ ॥

अपि च -

आयामी रमणीयरत्नरुचिरः पूर्वेण तत्तद्गृहं
[1]प्रोत्त (म्र) स्फुटशातकुम्भघटितस्तम्भः समुज्जृम्भते ।
पार्श्वे तस्य विभाति निष्ठुरतरस्फारस्फुरत्केसरः
साटोपोत्थकरालवक्त्रकुहरः कण्ठीरवो भैरवः ॥ ११८ ॥

---

१. दुरासदमनर्चकैः - ख ; २. भृत्पृका झम्बका - ख ; १. प्रोत्तद्ध - ख, प्रातब्ध - क ; पोत्तब्द - घ

---

**टिप्पणी** - नभ इति । नभःस्थलम् आकाशतलम् एव कषोपलः निकषाश्मा, तत्र उल्लिखितः कषितः भर्मकूटोच्चयः सुवर्णराशिः । भूभृत् पर्वतः । पृथ्वीवृत्तम् । दुरासदमिति । पूर्णिमाविधुसुसुन्दरं पूर्णचन्द्रवद्रमणीयम् । भूभृन्मणेः पर्वतराजस्य । दुहितुः सुतायाः पार्वत्या इत्यर्थः । पार्वती हि चामुण्डारूपेण महिषासुरं हतवती । तस्या एवालयः मैसूरुसमीपे महाबलगिरौ वर्तमानः कविना अत्र वर्णितः । पृथ्वीवृत्तम् । आयामीति । आयामी आयामवान् दीर्घ इत्यर्थः । शातकुम्भं सुवर्णम् । साटोपं सविजृम्भणं, उत्थम् उत्थितं करालवक्त्रं भयङ्करवदनं, तस्य कुहरं यस्य । कण्ठीरवः सिंहः । तत्तद्गृहं पूर्वेण इत्यस्य तस्य तस्य गृहस्य पूर्वतः इत्यर्थः । एनपा द्वितीया इति सूत्रेण गृहमिति द्वितीया । शार्दूलविक्रीडितं वृत्तम् ।

अहो ! सम्पन्न एव सेवावसरो भगवत्याः ।

तथाहि ।

कुर्वाणाः कमलाकरान् प्रतिदिशं दीर्घैरपाङ्गाञ्चलै-
स्तन्वानाः परिपूर्णचन्द्रवलयान् अभ्यन्तरे चाननैः ।
लिम्पन्त्यस्तनुकान्तिभिश्च ललना[१]स्तत्रालयं लीलया
[२](पङ्क्त्यैव) प्रविशन्ति सम्प्रति जगन्मातुः प्रणामोत्सुकाः ॥ ११९ ॥

नूपुरुक, किं ब्रवीषि ?

सखे पश्य,

नत्वा चन्द्रकलाधरस्य गृहिणीं गौरीं जगन्मातृकां
प्राकारोदरपार्श्वसीमनि सुखासीने वधूमण्डले ।
चक्षुः कौतुकभागधेय[१]लहरी काचित्समालक्ष्यते
माकन्दश्रितवीरुधामुपवने [२]मध्ये मधुश्रीरिव ॥ १२० ॥

---

१. तत्रालं - क ; २. पङ्गीयं - क, पंक्तिय - ख, पङ्गीय - ग , पङ्क्तेय - घ ; १. घटना - क; २. माद्ये - ख , माध्ये - ग ;

---

**टिप्पणी** - कुर्वाणा इति । अपाङ्गौ नेत्रयोरन्तौ । अञ्चलं प्रान्तदेशः । आननैः मुखैः । नेत्राणां कमलसादृश्यं मुखानां चन्द्रसादृश्यं च भङ्ग्या उक्तं कविना । शार्दूलविक्रीडितं वृत्तम् । नत्वेति । चन्द्रकलाधरस्य शिवस्य । गृहिणीं पत्नीम् । माकन्दः रसालवृक्षः । माकन्दं श्रिताः माकन्दश्रिताः । द्वितीया श्रितेत्यादिना समासः । माकन्दश्रिताश्च ताः वीरुधश्च, तासाम् । मधुश्रीः वसन्तलक्ष्मीः । वीरुधः लताः । शार्दूलविक्रीडितम् ।

किञ्च -

अस्याश्चेदलकप्रभा हरिमणेराडम्बरस्पर्धिनी
चाम्पेयप्रसवे मुहुः कृतपरीहासा च [1]नासा[1]पुनः ।
लीलाचङ्क्रमणं च लब्धविजयोल्लेखं करीन्द्रादिदं
सँल्लापः पिकसुन्दरीकलरवस्वादुत्वविद्यागुरुः ॥ १२१ ॥

इति ? (निपुणं विलोक्य)

(सहर्षौत्सुक्यम्)

कथमत्रैव म[2]त्प्रणयसर्वस्वं चम्पकलता[3]रूपधेयालङ्कारभूतं लवङ्गिकया सँल्लाप[4]रस[4]मनुभवति ? नूपुरक, किं ब्रवीषि ? (सोत्कण्ठं) तर्हि बहुलभागधेयोऽस्मि । लब्धमनोरथस्य तत्रभवतो भवतः साहचर्यात् इति ।

(सहर्षमालोक्य)

अहो ! [5]ऐकरूप्यघटनावैदग्ध्यं विधेः । तथा हि ।

---

१. मनः -ग ; २. प्रणयन - क ; ३. रूढ - क ; ४ .... ४ - नास्ति - क, ख, ग; ५. पिकरूप्य - क, ख, ग

---

टिप्पणी - अस्या इति । अलकाः चूर्णकुन्तलाः । हरिमणिः इन्द्रनीलमणिः । चाम्पेयः चम्पकः । लीलाचङ्क्रमणं विलासमयं गमनम् । रूपमेव रूपधेयम् । नामरूपभागेभ्यो धेयः इति स्वार्थे धेयप्रत्ययः । सुन्दर्याः केशपाशः इन्द्रनीलसदृशः, नासिका चम्पकपुष्पसदृशी, गमनं मत्तगजगमनसदृशं, भाषणं कोकिलालापतुल्यम् इति तात्पर्यम् । लक्ष्योपमा । शार्दूलविक्रीडितम् ।

वक्त्रं वन्दितचन्द्रबिम्बमरुणो दन्तच्छदः प्रोन्मिषद्-
बन्धूकद्युतिरेव काञ्चनघटीकुट्टाकपाकौ कुचौ ।
मूर्तिः कीर्तिविडम्बिनी च [1]तटिताम् अस्याश्च तस्यास्तथा
[2]नाम्ना केवलमेतयोर्मृगदृशोर्भेदग्रहो नान्यथा ।। १२२ ।।

(इति सोच्छ्वासम्)[3]

तस्यास्तनुद्युतिनवाम्बुषु सञ्चरन्त-
मद्यैव मे हृदयमीन[4]मतीव यत्नात् ।
आदाय वागुरिकया निजमाययैव
बध्नाति वीतकरुणो [5]विषमास्त्रदाशः ।। १२३ ।।

नूपुरक, किं ब्रवीषि ? अलमलं, शयलग्नेऽपि चम्पकलतारत्ने [6]किमर्थमावेग इति ?

(अन्यतो निष्क्रम्योर्ध्वमवलोक्य)

कथमिदानीमेवास्ताचलशिखरमारोहत्यम्बरमणिबिम्बम् ।

---

१. तटिवा - ख, कटिवेमान्याश्च - क ; २. नामा - ख ; ३. इति सोभ्यासम् - ख ; ४. मती यत्नात् - क, ख ; ५. निजमास्त्र - क, ख, घ ; ६. किमर्थमावेदयति - क ;

---

**टिप्पणी** - वक्त्रमिति । काञ्चनघटीकुट्टाकपाकौ सुवर्णघटपराजयकारकौ इत्यर्थः । कुचौ काञ्चनघटिकासदृशौ इति भावः । तटितां विद्युताम् । शार्दूलविक्रीडितम् । लक्ष्योपमा अलङ्कारः । तस्या इति । तनुद्युतयः देहकान्तय एव नवाम्बूनि नूतनजलानि, तेषु । वागुरिका जालिका । विषमास्त्रदाशः कामाख्यः धीवरः । वसन्ततिलकवृत्तम् । सावयवरूपकमलङ्कारः । शयलग्नेऽपि हस्तगतेऽपि । अम्बरमणिबिम्बं सूर्यबिम्बम् ।

सितकरनिकरैर्द्राक् [1]शीततां तत्र हातुं
प्रविशति चरमाब्धेरम्बु बिम्बच्छलेन ।
सपदि भुवनबन्धौ सोऽपि निष्क्रम्य वेगात्
कुचशिखरिषु [2]लिल्ये केवलं कामिनीनाम् ।। १२४ ।।

अपि च,

चक्रद्वन्द्वमिदं विमुञ्चति बहिश्चञ्च्वर्धदष्टं बिसं
पत्युन्मुक्तकरग्रहेव विमनाः संलक्ष्यते पद्मिनी ।
अल्पीयान् प्रणयापराधजनितो मानश्शनैस्सुभ्रुवा-
मादत्ते कुसुमायुधोऽपि भगवान् सज्जं धनुश्चैक्षवम् ।। १२५ ।।

अन्यच्च -

चुम्बन्नेव करैः क्रमेण विततैः प्राचीमुखं चन्द्रमा
मामाश्लिष्यति सम्प्रतीत्यनुचितं क्षन्तुं तदक्षान्तया ।
अग्रे संघटितापिधायकतया सद्यः प्रतीच्या दिशा
कौसुम्भारुणिता महायवनिकेवाभाति सन्ध्यातपः ।। १२६ ।।

---

१. सीततां हातुं - क, ख ; २. वीर्ये - क, ख

---

**टिप्पणी -** सितेति । सितकरः चन्द्रः । मालिनीवृत्तम् । चक्रद्वन्द्वमिति । चक्रद्वन्द्वं चक्रवाकयुग्मम् । चञ्च्वर्धदष्टं त्रोटिभक्षितार्धम् । बिसं मृणालम् । मानः प्रणयकोपः । ऐक्षवं धनुः इक्षुरूपं चापम् । इक्षोरिदम् ऐक्षवम् । ओर्गुणः, अवादेशः । शार्दूलविक्रीडितम् । चुम्बन्निति । विततैः विस्तारितैः । संघटितापिधायकतया कृतपिधानत्वात् । प्रतीच्या पश्चिमया । यवनिका प्रतिसीरा । शार्दूलविक्रीडितम् ।

(प्राचीमवलोक्य)

दस्योर्बिम्बमुखेऽतिसूक्ष्मधवलस्निग्धांशुका[1]योजिते
प्राचीनाद्रिविमानराजि[2]मकुटे कुम्भीवदम्भोरुहाम्।
तत्राबद्ध[3]मरुत्कणीपटलकस्फारस्फुरद्दर्पण-
च्छायामण्डलवच्चमत्कृतिपदं [4]लक्ष्मैतदालक्ष्यते ।। १२७ ।।

अपि च,

युक्तानां मनसा चकोरपरिषच्चेतः समुत्कण्ठते
शोकैः कोककुटुम्बिनीहृदयजैरिन्धे प्रभा चैन्दवी।
[5]भिद्यन्ते सह कैरवैः शशिशिलानाडीविभेदाः शनैः
शीर्यन्ते हि तमांसि दुःसहतरैर्मानैश्च वामभ्रुवाम् ।। १२८ ।।

अहो, [6]राजनि विरुन्धति तदीयः सर्वोऽपि विरुद्ध एव। तथा हि।

शीतांशु[6a]स्तपनायते शिखिशिखाचर्चायते चन्दनं
शय्यापि क्रकचायते विरचिता सद्यस्तनैः पल्लवैः।
गन्धक्ष्माधरमारुतोऽपि गरलज्वालावलेपायते
विश्लेषे तव हन्त चम्पकलते विश्वं च वैरायते ।। १२९ ।।

---

१. योचिता - ख, ग, घ ; २. मटुके - क ; ३. मरुक्मणी - ख, घ, मरुक्मिणी - ग ; ४. लक्ष्ये - ख ; ५. बित्यन्ते - ख, भित्यन्ते - ग ; ६. रजानि - घ ; ६a - तपनायन - क ;

---

**टिप्पणी** - दस्योरिति । दस्योः शत्रोः चोरस्य । लक्ष्म चिह्नम् । युक्तानामिति । कोककुटुम्बिनी चक्रवाकी । इन्धे दीप्यते । कैरवैः सह कुवलयैस्साकम् । अत्र सहोक्तिरलङ्कारः । वामभ्रुवाम् सुभ्रुवाम् । मानैः प्रणयकोपैस्सह । शार्दूलविक्रीडितम् । राज़ानि विरुन्धति राज्ञि विरुद्धे सति । शीतांशुरिति । तपनायते सूर्यवदाचरति । उपमानादाचारे इति क्यङ् प्रत्ययः । शिखिशिखाचर्चायते अग्निज्वालालेपवदाचरति । गरलं विषम् । विश्लेषः विरहः । वैरायते वैरं करोति । शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे इति क्यङ् । शार्दूलविक्रीडितम् । उपमा ।

द्रष्टुं तद्वदनं विलाससदनं घ्रातुं च गण्डस्थलीं
स्प्रष्टुं तत्तनुवल्लरीं [1]बहुसुखं पातुं च [2]बिम्बाधरम् ।
श्रोतुं तत्कलभाषितं रहसि च ध्यातुं च तच्चेष्टितं
त्यक्त्वान्यं विषयं ममेन्द्रि[3]यगणस्तत्रैव विश्राम्यति ॥ १३० ॥

(पुनरपि चम्पकलतां स्मृत्वा)

सर्वासां परिपूरणैकफलिनी सामिस्थिताप्यन्तिके
सा लभ्येत कदा नु चन्द्रवदनासीमन्तमुक्तामणिः ।
यामुत्तृष्णतरा चकोरतरुणी संत्यज्य भोज्यान्तरं
भूयोमूर्तिमतीमिवेन्दु[4]सुषमां बुद्धिर्ममाटीकते ॥ १३१ ॥

(पुनस्सानुस्मरणम् )

आलापश्रुतिरेकदापि सततं तस्यावतंसश्रुतौ
चेतोमण्डनमन्वहं सकृदपि स्वस्थासिका संविदि ।
अक्ष्णोर्गोचरता कदाचन शुभं दैनन्दिनं चक्षुषो-
र्जात्वेव स्मृतमङ्कपालिघटनं शश्वत्प्रतीकोत्सवः ॥ १३२ ॥

१. बहुसुधां - ख, ग ; २. बिम्बाधरीम् - ग ; ३. गुण - ग ; ४. सुषुमां - घ

**टिप्पणी -** सर्वासामिति । सामि अर्धम् । अन्तिके समीपे । इन्दुसुषमा चन्द्रिका । संवित् सम्भाषणम् । तस्यां संविदि । स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु इत्यमरः । सकृदपि एकवारमपि । चेतोमण्डनम् मानसस्यालङ्कारः । स्वस्थासिका सौख्येन स्थितिः । अङ्कः उत्सङ्गः प्रतीकोत्सवः अङ्गानामनन्दकारणम् । अङ्गं प्रतीकोऽवयव इत्यमरः । पद्यत्रयस्यापि शार्दूलविक्रीडितम् वृत्तं ।

(मन्मथमुद्दिश्य)

हन्यामितीच्छसि यदि त्वमनङ्ग [1]भो माम्
अन्यप्रसूनमयमार्गणतोऽद्य किं ते ।
तामेव चम्पकलतामुपरि [2]क्षिप द्राग्
[3]धन्यस्ततः कथमपि त्वदनुग्रहात्स्याम् ॥ १३३ ॥

(चम्पकलतां लक्षीकृत्य)

आलोक्य सम्प्रति [4]खलस्त्वदसंविधानं
व्यालोलयन् हृदयमुच्छ्वसितैर्विहारैः ।
चन्द्रानने श्वसितबन्धुरयं भवत्या
मन्दानिलोऽपि कुरुते मयि दुर्विनीतम् ॥ १३४ ॥

इत्यनेकधा वर्णयन् [5]परिहरन्नेव नवपल्लवशयनीयम्, उत्सृजन्नेवोपवनतरुच्छायासेवनं, कलयन्नेव कर्णपुटलग्नं कलमपि कोकिलारावं गरलमिश्रमिव, विधून्वन् परिपतितमिन्दुकिरणप्रसरणमुदग्रकुन्त[6]प्रहरणमिव, परित्यजन्नेव बकुलपरिमलगर्भ-

---

१. भूमन् - क, भो मो - ख ; २. क्षिपन्त्या - क, क्षिपं प्राक् - ख ; ३. धन्यस्तयः - क ; ४. मिलस्त्वाद् संनिधानं - क, खलस्त्वदसंविदानं - ख, खलस्त्वदसंविधानं -ग ; ५. परिहरन् - क ; ६. प्रकरणनुव - ख ;

---

टिप्पणी - हन्यामिति । प्रसूनं पुष्पम् । मार्गणः बाणः । इदमग्रिमं च पद्यं वसन्ततिलकछन्दसि निबद्धम् ।

मर्भकानिलं, [1]बिभ्यदेव कलरवान्मधुलिहां, [2]त्रसन्नेव पर्यन्त-पद्मिनी[3]विहरमाणकलहंसकोलाहलात्, स्मरन्नेव दुराधर्ष-मनङ्गप्रतापमनुपदं, कदा वा परिरभ्येत, कदा वा पुनरालप्येत, कदा वा दृश्येत अस्मद्भागधेयं प्रेयसी चम्पकलता मया, [4]केन वा प्रियसुहृदा विश्लेषदुःखोपशमो ममेति [5]कियन्तमनेहसं [6]व्यथमानः पुरो विलोक्य - दैवादिहागतः प्रियसुहृत्कमलाक्षः । कमलाक्ष, किं ब्रवीषि ? सखे पल्लवशेखर, किं निर्विण्ण एव दृश्यसे ? तथा हि ।

मूर्तिः पाण्डुकृशा, मनाग्रुचि मुखं, क्षामा भृशं गण्डभूः
[7]आलाप[8]स्त्वरिताक्षरः प्रतिपदं चालक्ष्यते व्याकुलः ।
निःश्वासग्लपिताधरश्च सुदृशः कस्याश्चिदेवाधुना
वैक्लव्यं विवरीवरीति [9]विरहोद्रेकप्रसक्तं तव ।। १३५ ।। इति ?

---

१. बिभ्यन्नेव - क, ख, ग, घ ; २. प्रसन्नीव - ख ; ३. विहारमाण-कलमांस - क ; ४. ने कन वा -क ; ५. कियन्तवनेवासं - क; ६. वूघमानः - क ; ७. आलोपः - क ; ८. स्खूलिताक्षरः - ख,ग ; ९. विरहे द्रेकाप्रसक्तं - क ;

---

टिप्पणी - कोकिलारावं पिककूजितम् । कुन्तः प्रासाख्य आयुधविशेषः । अर्भकानिलं मन्दमारुतम् । मधुलिहां भ्रमराणाम् । दुराधर्षं धर्षयितुमशक्यम् । विश्लेषः विरहः । कियन्तमनेहसं दीर्घकालम् । अनेहसं व्यथमान इत्यत्र कालाध्वनोरत्यन्तसंयोगे इति द्वितीया। निर्विण्णः विषण्णः । मूर्तिरिति । पाण्डुश्च सा कृशा च पाण्डुकृशा । मनाग्रुचि स्वल्पकान्ति । विवरीवरीति विशेषेण विवृणोति । यङ्लुगन्तस्य वृणोते रूपम् । शार्दूलविक्रीडितम् ।

मदनमहाराजविजयवैजयन्तीभूतायाः [१]चम्पकलतायाः ।

कमलाक्ष, किं ब्रवीषि ? (सविस्मयं ) सखे, पल्लवशेखर, कथं तस्यां तवानुरागप्रसक्तिः ? कथं त्वया लब्धा सा ? कथं वा [२]सँल्लापिता ? कथं विश्लेषः ? किमनुरागनिमित्तं येनेत्थमनपलपनीयमदनावेगेन व्याकुलोऽसि ? इति ?

(मुहूर्तं तूर्ष्णीं स्थित्वा दीर्घं निःश्वस्य)

पूर्वेद्युस्सन्ध्यामुखे चरमाचलशृङ्गमलङ्कुर्वति दिनकरबिम्बे सविलासमधि[३]निशि समागच्छन्नेव अहमुद्वेलमदासारमलिनीकृतमांसलकपोलभागम् असकृदाकृष्टकठोरलोहशृंङ्खलाखणात्कार[४]बधिरीकृतवीथीमुखम्, आयामिशुण्डावलयपिण्डीकृतपण्य[५]वीथिकासदनम्, अतिदीर्घदन्तकाण्डसंघटितकिङ्किणीशतम्, अत्युच्चकुम्भस्थलान्तरितदृष्टिपथालसितयन्तारम्, कमपि सधैर्यमभ्यर्णं एव वसतः [६]चित्रवर्मणः सदनस्य बहि [७]र्वितर्दिकामध्यवसम् । [८]अद्राक्षं च तत्राधिष्ठितबहिर्देहलीं जगदलङ्कर्मीणरूपधेयमस्मद्भागधेयमिव चम्पकलताम् ।

---

१. चम्पकतायापि वा - ख ; २. सल्लपिता - ख,घ ; ३. विशन्नागच्छन्नेव - क, ख, घ ; ४. बदरीकृत - ख ; ५. दीपिका - क ; ६. चित्रवर्मणः - ख ; ७. वितर्दिकायाम् - ख, ग, घ ; ८. अदाक्षम् - ख

---

**टिप्पणी** - विजयवैजयन्ती जयपताका । अनपलपनीयमदनावेगेन अनिर्वचनीयकामबाधया । तूर्ष्णीं स्थित्वा मौनमाश्रित्य । पूर्वेद्युः दिने । अधिनिशि रात्रौ । उद्वेलः असीमः । मदासारः मदजलधाराप्रवाहः । a - अत्र वाक्यं नार्थवत् । ''गजं दृष्ट्वा'' इति पदयोः योजने अर्थसामञ्जस्यं भवति । अलङ्कर्मीणं समर्थम् ।

[1]दृष्टमात्रैव साकर्षयन्त्येव ममाशयसर्वस्वमन्तर्जगाम । तदनु चार्धशर्वरीपर्यन्तं क्वचन पृथुल[2]कुसूलान्तरित[2]मूर्तिर्जोषमतिष्ठम् । तदनु निशीथे निद्रायमाणे [3]सर्वस्मिन्नपि जने मध्यमपालिकायामेव शयितवति तस्याः पत्यौ कनकाङ्गदहतके (सत्रा ?) चित्रवर्मणश्चिकुरसविध एव मातुरन्तर्गृहे सुप्तां तां सचमत्कारमशब्द[4]मुद्घाट्य कवाटं सवैदग्ध्यं मुखीकृत्य जिघ्रन्नेव कपोलतलं चुम्बन्नेव विमुग्धपुण्डरीकसदृक्षमाननबिम्बम्, [5]अम्बराञ्चलपिहितमपि कुचयुगलमसकृदेव स्पृशन् कथं कथञ्चित् अमुखरनूपुरम्, अकलक्वणितमेखलम्, अनपवृत्तपृथुलमौक्तिकसरं, असिञ्जितमणिवलयम् उद्धृत्य दोर्भ्याम्, अतित्वरितमुपरन्ध्रमार्गात् [6]निष्कुटवनबकुलमूलमानीतवानस्मि ।

तदनु मदीयमेव काञ्चनद्विपटमास्तीर्य तत्रारोप्य [7]ससम्भ्रममालिङ्ग्य, रन्तुमारभमाणे मयि मन्दं मन्दं प्रबुध्य, अवलोक्य, अभिमतसुरतापि अतर्कितोपनतकुक्कुटहतककूजित -

---

१. दृष्टिमात्रैव - क, ख, ग ; २ .... २ - अयं भागः नास्ति - क, ख, घ ; ३. सर्वेऽपि - क, ख, घ ; ४. मुग्दाटय - ख ; ५. अम्बराचलविहितमपि - क, ग ; ६. निपुट - ख ; ७. ससंभ्रमलिङ्ग्य - घ

---

टिप्पणी - आशयसर्वस्वं सकलं हृदयम् । शर्वरी रात्रिः । कुसूलं मृन्मयं धान्यपात्रम् । निशीथे अर्धरात्रे । चिकुरसविधे कुन्तलसमीपे । विमुग्धम् अत्यन्तसुन्दरम् । मुग्धः सुन्दरमूढयोः इत्यमरः । पुण्डरीकं सिताम्भोजम् । अम्बराञ्चलपिहितमपि वस्त्रान्तगूढमपि । उपरन्ध्रमार्गात् अल्पद्वारमार्गेण ।

[1]त्रस्ता पत्युर्भिया मामवधूय, कर्षन्तमेव चेलाञ्चलं मुहुर्मुहुरन्तर्विवेश । तदनु विफलमनोरथस्सन् पात्रभूतोऽस्मि विषमशराशरावेगस्य। कमलाक्ष, किं ब्रवीषि ?

(सहर्षविस्मयं)

साधु पल्लवशेखर, साधु।

धन्यो ममैष सुहृदेव परं विटानां
प्रायेण संसदि हि पल्लवशेखर त्वम्।
यद्रामणीयककथा सुरतेन रुच्या
सा चापि चम्पकलता स्ववशे तवासीत्।। १३६ ।। इति ?

[2]अर्धोपभुक्तफलमपि मां किमिति श्लाघसे धन्यतया। कमलाक्ष, किं ब्रवीषि ?

समग्रमेवानुभविष्यति फलरत्नमचिरेण । क्व गतस्ते प्रियसखो नूपुरक इति ? स पुनश्चण्डिका[3]शैलमेव मया प्रेषितः चम्पकलतामानेतुम्। प्रतिज्ञातं च तेन [4]रहः[4]।

---

१. त्रस्तवत्युर्भिया - ख ; २. अथोपभुक्त - क; अधोपभुक्त - ख ; ३. तैलमेव - क ; ४ .... ४ - नास्ति - ख, घ ;

---

टिप्पणी - धन्य इति । विषमशरशरावेगस्य मन्मथबाणकृतस्य उद्वेगस्य । कान्तं मनोरमं रुच्यम् इत्यमरः । वसन्ततिलकवृत्तम् । श्लाघसे प्रशंससि ।

यावन्न चुम्बति शशी रक्तस्सन् यामिनीमुखम् ।
तावत्त्वामपि तन्वङ्ग्या घटयिष्यामि कुत्रचित् ।। १३७ ।। इति ।

कमलाक्ष, किं ब्रवीषि ? सत्यप्रतिज्ञ एवं नूपुरको यदसौ कामगुप्तस्य [1]गृहिण्या कलवाण्या संघटय्य सोत्कण्ठ[2]माराधितवान् इति ?

(दक्षिणभुजस्पन्दमभिनीय, सहर्षं पुरोऽवलोक्य)

अहो, समागत एव नूपुरकः ।

नूपुरक, किं ब्रवीषि[3] १ सखे, पल्लवशेखर, लब्धचम्पकलतः त्वं नियतिवशादिति ? (सहर्षपुलकम्) कथमिव ?

नूपुरक, किं ब्रवीषि ?

यदद्य चम्पकलता [4]महीशूरपुरं प्रति प्रस्थातुकामा निजवर्षीयश्चित्राङ्गदस्य कुमारोदयोत्सवमाकर्ण्य पित्रा चित्रवर्मणा पुनराकारिता । तदनु मत्प्रणयसर्वस्व[5]भुवा लवङ्गिकया साकं रङ्गपुरीं प्रतिनिवृत्ता । श्रुतमिदं मत्प्रेयस्याः लवङ्गिकायाः सख्या पत्रलेखया । मयापि तयैव पत्रलेखया [6]भवदुत्कण्ठितवृत्तान्तः सर्वोऽपि चम्पकलतां प्रति प्रेषितः ।

---

१. गृहाण्या - क ; २. ममाराधितवान् - ख, समाराधितवान् - ग ; ३. ब्रवीमि - क ; ४. महीशूरनगरं - ग ; ५. भूपालवन्दिकया - क ; ६. भवदुत्कण्ठीख - क

---

**टिप्पणी** – यावदिति । सायंकाले चन्द्रोदयात् प्रागित्यर्थः । रक्तः लोहितः अनुरक्तश्च । मुखं वदनं प्रारम्भश्च । प्रदोषो रजनीमुखम् इत्यमरः । चुम्बति स्पृशति । घटयिष्यामि संगमयिष्यामि । नियतिवशात् भाग्यवशात् । भाग्यं स्त्री नियतिर्विधिः इत्यमरः । वर्षीयश्चित्राङ्गदस्य वृद्धस्य चित्राङ्गदस्य । वर्षीयान् दशामी ज्यायान् इति वृद्धपर्यायेष्वमरः । रङ्गपुरीं प्रति श्रीरङ्गपत्तनं प्रति ।

सा पुनर्भवत्सकाशं प्रेषितवती [1]वा(चि)कमिति। (इति हस्ते पत्रं ददाति)

(सहर्षविस्मयम्)

विटशेखरो विधिवशात्
विघ्नितमहिशूरनगरनिर्गमनाम् ।
चन्द्रोदये पुनर्मां
नन्दयतु [2]स्वैरमेतदुद्याने ।। १३८ ।।

(इति पत्रं वाचयन् नूपुरकालिङ्गनमभिनीय)

कान्तारत्नान्याकलय्याकलय्य
प्रेम्णा सार्धं प्रार्थनानां पुरस्तात् ।
श्लाघायोग्यं कुर्वतो मामिदानीं
भूयः किं वा [3]कल्पयामि प्रियं ते ।। १३९ ।।

नूपुरक, किं ब्रवीषि ? सखे पल्लवशेखर, किं ममापि कल्पनीयं प्रियं भवता, तदितः परं निष्कुटवनप्रवेशादन्यदिति ?

---

१. वाचकम् - क, ख, ग, घ ; २. स्वैरवेलिकद - ख, ३. कल्पभूमिः - क, कलभूमिः - ख

---

टिप्पणी - विट इति । वाचिकं सन्देशः । सन्देशवाग्वाचिकं स्यादित्यमरः । गीतिःछन्दः । कान्तेति । आकलय्याकलय्य पुनः पुनः सम्पाद्य । इन्द्रवज्रावृत्तम् । निष्कुटवनं गृहसमीपवर्ति उद्यानम् । गृहारामस्तु निष्कुटः इत्यमरः । प्रवेशादन्यत् । अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति पञ्चमी ।

(निष्कुटवनप्रवेशं नाटयित्वा सानन्दम्)

आयतोऽभिमुखं पुरः पुरहरः स स्फारवात्सल्यभूः
कारुण्याद् गिरिराजराजदुहितुः [1]दूरेऽन्तरायः कृतः ।
लब्धा सा सविधेऽपि चम्पकलता लावण्यसम्पन्निधिः
सर्वं सम्प्रति साधु साधु फलितं साम्राज्यमानङ्गकम् ।। १४० ।।

तथापीदमस्तु भरतवाक्यम् ।

नन्दत्वद्य सरस्वती रसवती नन्दन्तु विद्वज्जनाः
दीव्यन्त्वद्य समन्ततः क्षितिसुरैर्देवास्समभ्यर्चिताः ।
राजानस्सुखिनो भवन्तु सचिवैस्संरक्षयन्तो मही-
माकल्पं रसिकैरियं भुवि [2]कृतिश्चास्वादिता वर्धताम् ।। १४१ ।।

इति श्रीवेङ्कयामात्यविरचितः कामविलासभाणः सम्पूर्णः

---

१. धूरैतरायः - ख ; २. कृतिश्चासादिता - ख

---

**टिप्पणी -** पुरहरः शिवः । स्फारवात्सल्यभूः अधिकप्रीतिभूमिः । अन्तरायः विघ्नः । सविधे समीपे । आनङ्गकम् अनङ्गस्य सम्बन्धि । शार्दूलविक्रीडितम् । आकल्पं प्रलयपर्यन्तम् । संवर्तः प्रलयः कल्पः इत्यमरः । आङ् मर्यादाभिविध्योः इति सूत्रेण समासः । वर्धतां समेधताम् इत्याशीः । अशिषि लिङ्लोटौ इति लोट् । शार्दूलविक्रीडितवृत्तम् ।

*****

# अनुबन्धः (१)

## भाणलक्षणम्

१. भरतनाट्यशास्त्रे विंशेऽध्याये -

भाणस्यापि हि लक्षणमतः परं संप्रवक्ष्यामि ॥ (१०७)

आत्मानुभूतशंसी परसंश्रितवर्णनाविशेषस्तु ।
द्विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥ (१०८)

धूर्तविटसंप्रयोज्यो नानावस्थान्तात्मकश्चैव ।
एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥ (११०)

भाणस्यापि हि निखिलं लक्षणमुक्तं तथागमानुगतम् ॥

२. दशरूपके तृतीये प्रकाशे -

भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा ।
यत्रोपवर्णयेदेको निपुणः पण्डितो विटः ॥ (४९)

सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः ।
सूचयेद् वीरशृङ्गारौ शौर्यसौभाग्यसंस्तवैः ॥ (५०)

भूयसा भारतीवृत्तिरेकाङ्कं वस्तु कल्पितम् ।
मुखानिर्वहणे साङ्गे लास्याङ्गानि दशापि च ॥ (५१)

लास्याङ्गानि ।

गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ।
प्रच्छेदक स्त्रिगूढं च सैन्धवाख्यं द्विगूढकम् ॥ (५२)

उत्तमोत्तमकं चैव उक्तप्रत्युक्तमेव च ।
लास्ये दशविधं ह्येतदङ्गनिर्देशकल्पनम् ॥ (५३)

३. प्रतापरुद्रयशोभूषणे नाटकप्रकरणे -

भारतीवृत्तिभूयिष्ठं शौर्यसौभाग्यसंस्तवैः ।
सूच्येते वीरशृङ्गारौ विटेन निपुणोक्तिना ॥ (३९)

कल्पितेनेतिवृत्तेन धूर्तचारित्रवर्णनम् ।
एकोऽङ्को मुखनिर्वाही यत्र भाणः स संमतः ॥ (४०)

४. रसार्णवसुधाकरे तृतीयविलासे -

स्वस्य वान्यस्य वा वृत्तं विटेन निपुणोक्तिना ॥ (२३२)

शौर्यसौभाग्यसंस्तुत्या वीरशृङ्गारसूचकम् ।
बुद्धिकल्पितमेकाङ्कं मुखनिर्वहणान्वितम् ॥ (२३३)

वर्ण्यते भारतीवत्त्या यत्र तं भाणमीरते ।
एकपात्रप्रयोज्येऽस्मिन् कुर्यादाकाशभाषितम् ॥ (२३४)

अन्येनानुक्तमप्यन्यो वचः श्रुत्वेव यद् वदेत् ।
इति किं भणसीत्येतद् भवेदाकाशभाषितम् ॥ (२३५)

लास्याङ्गानि दशैतस्मिन् संयोज्यान्यत्र तानि तु ।
गेयपदं स्थितपाठ्यमासीनं पुष्पगन्धिका ॥ (२३६)

प्रच्छेदकस्त्रिमूढं च सैन्धवाख्यं द्विमूढकम् ।
उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेव च ॥ (२३७)

अथ गेयपदम् -

वीणादिवादनेनैव सहितं यत्र भाव्यते ।
ललितं नायिकागीतं तद् गेयपदमुच्यते ॥ (२३८)

चञ्चत्पुटादिना वाक्याभिनयो नायिकाकृतः ।
भूमिचारीप्रचारेण स्थितपाठ्यं तदुच्यते ॥ (२३९)

भ्रूनेत्रपाणिचरणविलासाभिनयादिकम् ।
योज्यमासीनया पाठ्यमासीनं तदुदाहृतम् ॥ (२४०)

नानाविधेन वाद्येन नानाताललयान्वितम् ।
लास्यं प्रयुज्यते यत्र सा ज्ञेया पुष्पगन्धिका ॥ (२४१)

अन्यासङ्गमशङ्किन्या नायकस्यातिरोषया ।
प्रेमच्छेदप्रकटनं लास्यं प्रच्छेदकं विदुः ॥ (२४२)

अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलङ्कृतम् ।
नाट्यं पुरुषभावाढ्यं त्रिमूढकमुदाहृतम् ॥ (२४३)

देशभाषाविशेषेण चलद्वलयशृङ्खलम् ।
लास्यं प्रयुज्यते यत्र तत्सैन्धवमिति स्मृतम् ॥ (२४४)

चारीभिर्ललिताभिश्च चित्रार्थाभिनयान्वितम् ।
स्पष्टभावरसोपेतं लास्यं यत्तद् द्विमूढकम् ॥ (२४५)

अपरिज्ञातपार्श्वस्थं गेयभावविभूषितम् ।
लास्यं सोत्कण्ठवाक्यं तदुत्तमोत्तमकं भवेत् ॥ (२४६)

कोपप्रसादजनितं साधिक्षेपपदाश्रयम् ।
वाक्यं तदुक्तप्रत्युक्तं यूनोः प्रश्नोत्तरात्मकम् ॥ (२४७)

शृङ्गारमञ्जरी मुख्यमस्योदाहरणं मतम् ।
लास्याङ्गदशकं तत्र लक्ष्यं लक्ष्यविचक्षणैः ॥ (२४८)

*****

# अनुबन्धः -२
## अद्यावधि ज्ञाताः भाणाः

| | | |
|---|---|---|
| १. | अनङ्गजीवनभाणः | कोशुन्नितामपुरान् विरचितः (Ptd. TSS, 1958) |
| २. | अनङ्गतिलकभाणः | वरदार्यरचितः |
| ३. | अनङ्गब्रह्मविद्याविलासभाणः | रङ्गनाथकृतः |
| ४. | अनङ्गमङ्गलभाणः | सुन्दरकविकृतः |
| ५. | अनङ्गविजयभाणः | जगन्नाथपण्डितकृतः |
| ६. | अनङ्गविजयभाणः | शिवरामकृष्णरचितः |
| ७. | अम्माभाणः (वसन्ततिलकभाणः) | वरदाचार्यकृतः |
| ८. | आनन्दतिलकभाणः | |
| ९. | उभयाभिसारिकाभाणः | चतुर्भाण्यान्तर्गतः। वररुचिकृतः। (Ptd, 1958) |
| १०. | कन्दर्पदर्पणभाणः | वेङ्कटकविकृतः |
| ११. | -"- | श्रीकण्ठकविकृतः |
| १२. | -"- | श्रीकृष्णकविरचितः |
| १३. | कन्दर्पदर्पविलास भाणः | रामशर्मरचितः (Ptd. 1910) |
| १४. | कन्दर्पविजयभाणः | धनुगुरुवर्यरचितः |
| १५. | कर्पूरचरितभाणः | वत्सराजविरचितः |
| १६. | कामकलाविलासभाणः (कामविलासभाणः) | वेङ्कप्पय्यरचितः |
| १७. | कुवलयानन्दभाणः | |

| | | |
|---|---|---|
| १८. | कुसुमबाणविलासभाणः | रामचन्द्रकविविरचितः |
| १९. | गणेशचरितभाणः | घनश्यामविरचितः |
| २०. | गोपाललीलार्णवभाणः | गोविन्दविरचितः |
| २१. | चातुरीचन्द्रिकाभाणः | वेङ्कटरायकृतः |
| २२. | चोळभाणः | वरदाचार्यकृतः |
| २३. | तमालिकासङ्गमनभाणः | |
| २४. | तरुणभूषणभाणः | शठकोपकविकृतः |
| २५. | दानकेलिकौमुदीभाणः (भाणिका ?) | रूपगोस्वामिकृतः |
| २६. | धूर्तविटसंवादभाणः (चतुर्भाण्यन्तर्गतः) | ईश्वरदत्तकृतः |
| २७. | पञ्चबाणविजयभाणः (शृङ्गारशृङ्गाटकभाणः) | रङ्गाचार्यकृतः Ptd 1882 |
| २८. | पञ्चबाणविलासभाणः | |
| २९. | पञ्चायुधप्रपञ्चभाणः | त्रिविक्रमपण्डितकृतः |
| ३०. | पद्मप्राभृतकम् (चतुर्भाण्यन्तर्गतम्) | शूद्रकरचितम् Ptd 1958 |
| ३१. | प्रद्युम्नानन्दभाणः | वेङ्कटाध्वरिकृतः |
| ३२. | पादताडितकम् (चतुर्भाण्यन्तर्गतम्) | श्यामिलकरचितम् |
| ३३. | भाणः | भास्करकृतः |
| ३४. | मंदनगोपालभाणः | स्वयम्भूनाथरामरचितः |
| ३५. | मदनभूषणभाणः | अप्पयज्वरचितः |
| ३६. | मदनमञ्जरीपरिणयभाणः | वैद्यनाथविरचितः |
| ३७. | मदनविलासभाणः | नागनाथकृतः |
| ३८. | मदनसाम्राज्यभाणः | तञ्जापुरीभुजङ्गकविरचितः |
| ३९. | मदनाभ्युदयभाणः | कृष्णमूर्तिशास्त्रिकृतः |
| ४०. | महिषमङ्गलभाणः | |

| | | |
|---|---|---|
| ४१. | मालमङ्गलभाणः | |
| ४२. | मिश्रभाणः | गुण्डरामरचितः |
| ४३. | मुकुन्दानन्दभाणः | काशीपतिविरचितः (Kavyamala, Bombay) |
| ४४. | रससदनभाणः | प्रह्लादन रचितः (Kavyamala, Bombay) |
| ४५. | रसिकजनरसोल्लासभाणः | वेङ्कटविरचित : |
| ४६. | रसिकजीवनमानसोल्लासभाणः | श्रीनिवासाचार्यकृतः |
| ४७. | रसिकरञ्जनभाणः | - ” - |
| ४८. | रसोदारभाणः | सुरपुरम् अण्णयार्यकृतः |
| ४९. | रसोल्लासभाणः | श्रीनिवासवेदान्ताचार्य-कृतः |
| ५०. | लीलादर्पणभाणः | पद्मनाभविरचितः |
| ५१. | लीलामधुकरभाणः | साहित्यदर्पणोल्लिखितः |
| ५२. | वल्लवीपल्लवोल्लासभाणः | मञ्जुळाचार्यकृतः |
| ५३. | वसन्ततिलकभाणः | वरदाचार्यकृतः |
| ५४. | - ” - | भास्करकविरचितः |
| ५५. | वसन्तभूषणभाणः | नृसिंहसूरिरचित : |
| ५६. | विलासभूषणभाणः | वेङ्कटकृष्णरचितः |
| ५७. | शारदातिलकभाणः | शङ्कररचितः |
| ५८. | - ” - | (शेषगिरिरचितः) |
| ५९. | शारदानन्दभाणः | |
| ६०. | श्रीरङ्गनाथभाणः | श्रीनिवासकविकृतः |
| ६१. | श्रीरङ्गराजभाणः | गोपालरायकृतः |
| ६२. | शृङ्गारकोशभाणः | गीर्वाणेन्द्ररचितः |

| | | |
|---|---|---|
| ६३. | शृङ्गारकोशभाणः | कश्यपरचितः |
| ६४. | शृङ्गारचन्द्रिकाभाणः | |
| ६५. | शृङ्गारतरङ्गिणी भाणः | |
| ६६. | शृङ्गारतिलकभाणः | रामचन्द्रदीक्षितकृतः |
| ६७. | शृङ्गारदीपिकाभाणः | वेङ्कटाध्वरिकृतः |
| ६८. | शृङ्गारभूषणभाणः | गगनभट्टबाणरचितः |
| ६९. | शृङ्गारमञ्जरीभाणः | गोपालरायकृतः |
| ७०. | शृङ्गाररसोदयमिश्रभाणः | लिङ्गगुणरामरचितः |
| ७१. | - '' - | रामसुकविशेखरकृतः |
| ७२. | शृङ्गारविलसितभाणः | नारायणकविरचितः |
| ७३. | शृंगारविलासभाणः | साम्बशिवकृतः |
| ७४. | शृङ्गारशृङ्गाटकभाणः | रङ्गनाथरचितः |
| ७५. | शृङ्गारशेखरभाणः | अभिनवकालिदासकृतः |
| ७६. | शृङ्गारसञ्जीवनभाणः | शठजित्कविरचितः |
| ७७. | शृङ्गारसर्वस्वभाणः | चूडामणिकविरचितः |
| ७८. | - '' - | स्वामिमिश्रशास्त्रिकृतः |
| ७९. | - '' - | कौशिकनल्लाबुधकृतः (K.M. Bombay) |
| ८० | श्यामलाभाणः | चिन्तरमणिरचितः |
| ८१. | शृङ्गारसुधाकरभाणः | रामवर्मयुवराजविरचितः |
| ८२. | शृङ्गारसुधार्णवभाणः | रामचन्द्ररचितः |
| ८३. | शृङ्गारस्तबकभाणः | नृसिंहप्रणीतः |
| ८४. | सरसकविकुलानन्दभाणः | रामचन्द्ररचितः |
| ८५. | सारस्वतोल्लासभाणः | वेङ्कटरामकविकृतः |
| ८६ | हरिविलासभाणः | हरिदासरचितः |

# श्लोकानुक्रमणी